अतः लक्षं याचे। एतदपि सुहृत्स्वजनबन्धुसम्माननाय, दीनानाथदानाय एतादृशाय भोगोपभोगाय नालम्। अतः कोटिं, शतकोटि सहस्रकोटिं वा याचे। एतावति चिन्तिते शुभकर्मोदयेन तत्क्षणमेव, शुभपरिणामं प्राप्नोत्। सः संवेगं प्राप्तवान्। तस्य चिन्तनं प्रारभत। अहो लोभस्य विलसितम्। द्विसुवर्णमाषकार्यार्थम् अगच्छम्। लाभं दृष्ट्वा कोटिरपि मनोरथशमनाय न पर्याप्ता । अपरं च विद्यापठनार्थं विदेशम् अगच्छम् । अमुं हेतुं मातरं च अवधीर्य, अवगणय्य उपाध्यायोपदेशम्, अवमन्य च कुलम् एषा स्त्री अवरकुलजा इति ज्ञात्वापि मोहितः। तस्माद् अलं सुवर्णेन। अलं विषयसङ्गेन। अलं संसारप्रतिबन्धेन। एतादृशं चिन्तयन् सः जातिस्मरणेन सम्बुद्धो जातः। अस्मिन् जगति स्वयमेव सर्वं कृत्वा, देवताभिः विशेषरूपेण दत्तमाचारं गृहीत्वा राज्ञः सकाशं गतः। राजा अपृच्छत्,'किं चिन्तितम्' इति। तेनापि निजमनोरथविस्तरः कथितः। उक्तं च –

यथा लाभस्तया लोभो लाभाल्लोभः प्रवर्धते।
द्विमाषयाचिना कर्म शतकोट्या न सिध्यति।।

प्रहृष्टमनाः राजा अवदत्, 'कोटिमपि ददामि, गृहाण आर्य'। कपिलः अवदत्, 'पर्याप्तार्थेन। परित्यक्तः मया गृहवासः'। तदा राजानं धर्मलाभान्वितं कृत्वा सः नगराद् बहिरगच्छत्। षण्मासानन्तरं च 'केवलज्ञानं' प्राप्तवान्।

# ५. सद्दालपुत्त-संबोहण-पयं

तए णं समणे भगवं महावीरे सद्दालपुत्तस्स आजीविओवासगस्स एयमट्ठं पडिसुणेइ, पडिसुणेत्ता सद्दालपुत्तस्स-आजीविओवासगस्स पंचसु कुंभारावणसएसु फासु-एसणिज्जं पाडिहारियं पीढ-फलग-सज्जो-संथारयं ओगिण्हित्ता णं विहरइ ।

तए णं से सद्दालपुत्ते आजीविओवसए अण्णया कयाइ वाताहतयं कोलालभंडं अंतो सालाहिंतो बहिया णीणेइ, णीणेत्ता आयवंसी दलयइ ।

तए णं से समणे भगवं महावीरे सद्दालपुत्त-आजीविओवेसयं एवं वयासी - 'सद्दालपुत्ता ! एसं णं कोलालभंडे कहं कओ ?'

तए णं से सद्दालपुत्ते आजीविओवसए समणं भगवं महावीरं एवं वयासी - 'एस णं भंते ! पुव्विं मट्टिया आसी, तओ पच्छा उदएणं तिम्मिज्जइ, तिम्मिज्जित्ता छारेण य करिसेण य एगयओ मीसिज्जइ, मिसिज्जित्ता चक्केआरुब्भिज्जइ, तओ बहवे करगा य वारगो य पिहडगा य घडगा य अद्धघडगा य कलसगा य अलिंजरगा य जंबूलगा य उट्टियाओ य कज्जंति ।'

तए णं से समणे भगवं महावीरे सद्दालपुत्त-आजीविओवेसयं एवं वयासी - 'सद्दालपुत्ता ! एस णं कोलालभंडे किं उट्ठाणेण कम्मेणं बलेणं वीरिएणं-पुरिसक्कार-परक्कमेणं कज्जंति, उदाहु अणुट्ठाणेणं अकम्मेणं अबलेणं अवीरिएणं अपुरिसक्कार-परक्कमेणं कज्जंति ?'

तए णं से सद्दालपुत्ते आजीविओवसए समणं भगवं महावीरं एवं वयासी – 'एस णं भंते ! अणुट्ठाणेण अकम्मेणं अबलेणं अवीरिएणं अपुरिसक्कार–परक्कमेणं ! नत्थि उट्ठाणे इ वा कम्मे इ वा बले इ वा वीरिए इ वा पुरिसक्कारपरक्कमे इ वा, नियत्ता सव्वे भावा।'

तए णं से समणे भगवं महावीरे सद्दालपुत्त–आजीविओवेसयं एवं वयासी – 'सद्दालपुत्ता ! जइ णं तुब्भे केइ पुरिसे वायाहयं वा पक्केलयं वा कोलालभंडं अवहरेज्ज वा विक्खिरेज्ज वा भिंदेज्ज वा छिंदेज्ज वा परिट्ठवेज्ज वा, अग्गिमित्ताए वा भारियाए सद्धिं विउलाइं भोगभोगाइं भुंजमाणे विहरेज्जा, तस्स णं तुमं पुरिसस्स कं दंडं वत्तेज्जासि ?'

'भंते ! अहं णं तं पुरिसं आओसेज्जा वा हणेज्ज वा बंधेज्जा वा महेज्ज वा तज्जेज्ज वा तालेज्ज वो निच्छोडेज्ज वा निब्भुच्छेज्ज वा अकालेचेव जीवियाओ ववरोवेज्ज ।'

'सद्दालपुत्ता ! नो खलु तुब्भं केइपुरिसे वायाहयं वा पक्केल्लइयं वा कोलालभंडो अवहरइ वा भिंदइ वा अच्छिंदइ वा परिट्ठवेइ वा अग्गिमित्ताए भारियाए सद्धिं विउलाइं भोगभोगाइं भुंजमाणे विहरइ । णो वा तुमं तं पुरिसं आओसेसि वा हणेसि बंधेसि वा महेसि वा तज्जेसि वा तालेसि वा निच्छोडेसि वा निब्भच्छेसि वा अकाले चेव जीवियाओ ववरोवेसि, जइ नत्थि उट्ठाणे इ वा कम्मे इ वा बले इ वा वीरिए इ वा पुरिसक्कारपरक्कमे इ वा, नियत्ता सव्वे भावा। अह णं तुब्भं केइ पुरिसे वायाहयं वा पक्केल्लयं वा कोलालभंडं अवहरेइ वा, विक्खिरेइ वा भिंदेइ वा अच्छिंदेइ वा परिट्ठवेइ वा अग्गिमित्ताए वा भारियाए सद्धिं विउलाइं

भोगभोगाइं भुंजमाणे विहरइ तुमं वा तं पुरिसं आओसेसि वा हणेसि बंधेसि वा महेसि वा तज्जेसि वा तालेसि वा निच्छोडेसि वा निब्भच्छेसि वा अकाले चेव जीवियाओ ववरोवेसि, तो जं वदसि नत्थि उट्ठाणे इ वा कम्मे इ वा बले इ वा वीरिए इ वा पुरिसक्कारपरक्कमे इ वा, नियत्ता सव्वे भावा, तं ते मिच्छा ।'

एत्थ णं से सद्दालपुत्ते आजीविओवासए संबुद्धे ।

## सद्दालपुत्रसम्बुद्धिः।

एकदा श्रमणभगवान् महावीरः सद्दालपुत्राय इममर्थं कथयति। तच्छ्रुत्वा आजीवकोपासकः सद्दालपुत्रः पञ्चशतेषु कुम्भकारापणेषु भिक्षामयाचत। तदर्थं जीवजन्तुविरहितम् आसनं पीठ–फलक–शय्या–संस्तरकयुतं गृहीत्वा विहरति स्म।

तदा कस्मिंश्चित् काले आजीवकोपासकः सद्दालपुत्रः वाताहतं कुलालभाण्डं गृहाद् बहिरानीय आतपे अचूर्णयत्।

तदा श्रमणभगवान् महावीरः तं सद्दालपुत्रम् अवदत्, 'सद्दालपुत्र, अस्य कुलालभाण्डस्य किं कृतम्?' कुलालभाण्ड कथं निर्मितं वा? इति।

सः आजीवकोपासकः सद्दालपुत्रः महावीरम् एवम् अवदत्, 'आदौ मृत्तिका आसीत्, अनन्तरम् उदकेन संस्तीम्य, क्षारेण गोमयेन च एकीकृत्य, चक्रे आरोषितम्' तेन घटशराव–उदञ्चनादयः बह्वाकाराः निर्मिताः' इति।

श्रमणभगवान् महावीरः तदा आजीवकोपासकं सद्दालपुत्रम् एवम् अवदत्, 'सद्दालपुत्र अस्य कुलालभाण्डस्य निर्माणे उत्थानकर्म-बल-वीर्य-पुरुषकार-पराक्रमैः किम् अथवा अनुत्थानकर्म- अबल-अवीर्य-अपुरुषकार-अपराक्रमैः किम्' इति।

तदा सद्दालपुत्रः एवम् उवाच, 'भगवन्, अनुत्थानकर्म-अबल-अवीर्य-अपुरुषकार- अपराक्रमैः नास्ति कुलालभाण्डनिर्माणम्, तथैव उत्थानकर्म-बल-वीर्य-पुरुषकार-पराक्रमैरपि नास्ति, एतत्तु नियतं तत्र'।

भगवान् अवदत्, 'सद्दालपुत्र, अग्निमित्रभार्यया सह विपुलभोगभुञ्जानः त्वं, यदि कोऽपि वाताहतं अग्निपक्कम् एतत् कुलालभाण्डं अवहरेत्, विकिरेत्, भिन्द्यात्, 'छिन्द्यात्, परिस्थापयेत्, तर्हि तं कथं दण्डयसि' इति।

सः अवदत्, 'भगवन्, अहं तं पुरुषं कशाभिः अवकर्षामि, हन्मि, बध्नामि, मथ्नामि, तर्जयामि, ताडयामि, निर्भर्त्सयामि अकाले च समाप्तायुषं करोमि' इति।

'अपि याथार्थ्येन तस्मिन् काले त्वम् एवंविधं वर्तिष्यसे?' इति। यदि उत्थानकर्म - बल - वीर्य - पुरुषकार - पराक्रमादयः नियताः तथापि त्वम् एवंविधं करोषि? करोषि चेद् अनियताः एते भावाः। तस्मात् मिथ्या'।

अनयारीत्या सद्दालपुत्रः सम्बुद्धः जातः।

********

# ६. सच्चसेट्ठि–कहा

एत्थेव भारहेवासे पहायरो णाम राया । सव्वत्थविक्खायजसो दुवालसविह–सावयधम्मपरिपालणपरायणो जइजण–पज्जुवासणबद्ध–लक्खो परोवयारकरणाइगुणसहस्ससमलंकिओ सच्चो नाम सेट्ठी । तस्स य इहलोयमित्तपडिबद्धो धम्माणुट्ठाणविरहिओ कणिट्ठो बलदेवो णाम भाया । सो य जाणवत्तेण परविसएसु गच्छइ । अण्णया य बहुलाहो हवइ त्ति निसामिऊण गओ चोडविसए । चोडराया वि सच्चसेट्ठिणो गुणणिवहं जणेण वण्णिज्जमाण सुणिऊण तद्दंसणाणुरायरत्तो तब्भाउयं बलदेवं भणइ – 'सव्वहा मम दंसणत्थं सच्चसेट्ठिं आणेज्जासि' त्ति । एवं च नरिंदायरं पेच्छिऊण पडिसुमयमणेण । कालक्कमेण णियमंदिरमुवागओ सच्चस्स परिकहेइ । अन्नया य चवलत्तणओ लच्छीए उदयत्तणओ अंतराइयकम्मस्स अप्पदविणो जाओ सच्चसेट्ठी । तओ तेण चोडविसयगमणा य पुट्ठो पहायरणरिंदो, अणुण्णाओ य तेण तयणंतरं तु उचियाइं महत्थाइं महग्घाइं विविहभंडाइं गहिऊण भाऊणा समं गओ चोडविसयं सच्चसेट्ठी । तदागमणं च निसामिऊण तुट्ठो चोडराया, दवावियं निवासमंदिरं, पूइओ उचियपडिवत्तीए, अत्तणो य समीवम्मि धरिओ कइवयवासराइं । अह विणिवट्टिए भंडे, गहिए सदेसपाउग्गे पडिभंडे चोडविसयाहिवइ अणुजाणाविऊण समारूढो णावाए सच्चसेट्ठी । –

अणुकूलपवणपेल्लियमहल्लधयवडवड्ढियावेगा ।
गंतु जया पयट्टा नियपुरहुत्तं तओ नावा ।।

तहियं आरूढा ते जाव पलोयंति कोउहल्लेण।
अणिलुल्ललंतकल्लोलभीसणंजलहिपेरंतं ।।

ताव णियतुंगिमाविहियविंझगिरिविब्भमो लहुं दिट्ठो ।
सलिलोवरिं वहंतो अतुच्छदेहो महामच्छो ।।

तं दट्ठुं बलदेवेण जंपियं एसपव्वओ एत्थ ।
इंताणं णासि जओ ता तुब्भे मग्गपब्भट्ठा ।।

णिज्जामगेहि भणियं ण पव्वओ किंतु एस मच्छो त्थि ।
सो चेव अयं मग्गो वामोहं कुणह मा सामी ।।

बलदेवेण भणियं – 'अहं पुण इहं चेव विविहभंडपडिहत्थं जाणवत्तं हारेमि जइ मच्छो होज्जा ।' एवं च उभयपक्खेहिं वि सच्चसेट्ठिं सक्खिं काऊण विहिया होड्डा । तेय निज्जामगा पडिबेडए गंतूण मच्छपिट्ठिम्मि परिक्खणत्थं तणपूलयपडलं पज्जालिउमारद्धा । सो य मच्छो तेण परितत्तसरीरो झड त्ति निबुड्डो अच्छाहे जले । एवं हारियं जाणवत्तं बलदेवेण, परितुट्ठा णिज्जामगा, पत्ता य कमेण नियनयरं । तओ तेहिं पडिरुद्धं जाणवत्तं । समुत्तारिऊण तीरे मुक्को बलदेवो । पारद्धो अणेण झगडओ निज्जामगेहिं समं, जहा – 'असच्चा इमे मच्छहारिणो चिलाया मए विजिय' त्ति काऊण 'आडंबरं उवदंसंति' त्ति भणिऊण बला चेव भंडं उत्तारिउमारद्धो । निज्जामगेहि वाहिया नरवइणो आणा । न ठाइ बलदेवो । तओ रायाणं उवट्ठिया दो वि पक्खा । तेसिं च परोप्परं विवदंताणं परमत्थं अवियाणिऊण भणियं रन्ना – 'अरे, एत्थ ववहारे को सक्खि ?' निज्जामगेहिं भणियं – 'देव, अत्थि चेव सक्खि, परं नियसहोयरं

उवेक्खिऊण किं अम्हाणं सक्खित्तणं करिस्सइ ?' राइणा भणियं – 'को पुण सो?' तेहिं भणियं – 'सच्चसेट्ठी । एवं वुत्ते एगंते ठाऊण पुच्छिओ सो रन्ना कज्जपरमत्थं ।'

ताहे स सच्चसेट्ठी परिभावइ किं करेमि एव ठिए ।
जइ अवितहं न जंपेमि होइ ता मे वयकलंको ।।

जइ पुण जहेव वित्तं तहेव साहेमि ता लहु भाया ।
पावइ अणत्थमत्थो जाइ हीरइ पसिद्धी वि ।।

ता दोन्नि वि गरुयाइं आवडियाइं इमाइं कज्जाइं ।
एक्कं नि परिच्चइउं न तरामि करेमि किं इण्हिं।।

अहवा इहलोयकए कहं च चिरकालपालियं नियमं ।
गुरुमूले पडिवन्नं जाणंतो हं विराहेमि ।।

किं एत्तो अइपावं जं जाणंता वि भवअसारत्तं ।
पडिसिद्धेसुवि अत्थेसु मोहओ संपयट्टंति ।।

किं बहुणा –

जइ पडइ सिरे वज्जं सयणो वि परं मुहो हवइ लच्छी ।
वच्चइ तहावि अलियं कहमवि नाहं वइस्सामि ।।

इइ निच्छयं काऊण भणिओ सो सेट्ठिणा णराहिवो, 'जं इमे वरागा निज्जामगा जंपंति तं सच्चं, मम भाया पुण अलियवाइ' त्ति। इमं य सोच्चा राया तुट्ठो चिंतिउं पयट्टो – 'अहो, अज्ज वि एरिसा सच्चवाइणो दीसंति जे नियसहोयर सिरिविणासेवि णियमज्जायं न

चयंति, ता मंडिज्जइ एवंविहेहिं कलिकाले वि भूमिमंडलं' ति परिभाविऊण आहूया निज्जामगा, सरोसं तज्जिया य, जहा – 'रे दुरायारा, जइ कह वि अमुणियपरमत्थेण मम वणिएण तहाविहं जंपियं ता किं वयणछलमेत्तेण वि अणेगभंडभरियबोहित्थं घेत्तुं उवट्ठिया ।' एवमाइहिं वयणेहिं णिब्भच्छिऊण किंचि दाऊण निद्धाडिया, दव्वसारं पि समप्पियं सच्चसेट्ठिस्स, बलदेवो वि भणिओ, 'मा पुण एवं करेज्जासु ।'

इय अलियवयणपरिहारकारिणो इहभवेवि ।
जणपुज्जाहुंति नरा परलोए लीलाए जंति निव्वाणं ।।

## सत्यश्रेष्ठिकथा

अस्मिन् एव भारतवर्षे प्रभाकरो नाम राजा। सर्वत्र विख्यातयशः, द्वादशविधश्रावकधर्मपरिपालनपरायणः यतिजन-पर्युपासनबद्धलक्ष्यः परोपकारादिगुणसहस्रसमलङ्कृतः सत्यो नाम श्रेष्ठी आसीत्। तस्यैव आसीद् बलदेवनामा कनिष्ठभ्राता परमैहिकः धर्मानुष्ठानविरहितश्च। सः यानेन परदेशमगच्छत्। बहुलाभदायकः चोलप्रदेशः इति श्रुत्वा एकदा सः तत्र गतः। एकदा अन्येभ्यः सत्यश्रेष्ठिनः गुणान् श्रुत्वा तस्य दर्शनाभिलाषी चोलराजा तस्य भ्रातरं बलदेवमभणत्, 'सर्वथा मम दर्शनार्थं सत्यश्रेष्ठिनमानय तं द्रष्टुमिच्छामि' इति। राज्ञः श्रेष्ठिनं प्रति आदरं दृष्ट्वा अनेन प्रतिश्रुतम्। कालान्तरेण स्वगृहं निवर्त्य सः तद्वृत्तं सत्यश्रेष्ठिने अकथयत्। एकदा लक्ष्म्याः चपलत्वेन अन्तरायकर्मणः उदयेन च सत्यश्रेष्ठी दरिद्रः जातः। तदा चोलदेशगमनार्थं प्रभाकरराजं सत्यश्रेष्ठी अपृच्छत् स च

अन्वमन्यत। तदनन्तरं तत्र विक्रेतुम् उचितानि महार्थानि महार्घाणि भाण्डानि गृहीत्वा सत्यश्रेष्ठी भ्रात्रा सह चोलदेशमगच्छत्। तस्य आगमनं श्रुत्वा चोलराजः तस्मै निवासमन्दिरम् अदापयत्। यथोचितं सम्मानीतवान् कतिपयवासरपर्यन्तं च स्वसंन्निधौ अस्थापयत्। अनन्तरं महार्घानि भाण्डानि विक्रीय, नूतनानि भाण्डानि क्रीत्वा चोलाधिपतिमनुज्ञाप्य नावं समारूढः सत्यश्रेष्ठी।

सुष्ठु पवनप्रेरिता महापताकशोभिता।
गन्तुं जवेन प्रवृत्ता स्वपुरं प्रति नौस्तदा।।

तामारूढा हि यावत्ते पश्यन्ति सकुतूहलम्।
अनिलोल्लासकल्लोलं भीषणं जलधौ भिया।।

निजोन्नतत्वात् तत्राभात् गिरेः विन्ध्यस्य विभ्रमः।
सलिलोपरि वहन् अतुच्छदेहो महामत्स्यः ।।

बलदेवो हि तं दृष्ट्वा जल्पति 'पर्वतोऽत्र हि।
आगमकाले नासीद्धि, मार्गभ्रष्टाः वयं ननु'।।

नौनायकेन कथितं 'मत्स्योऽयं न तु पर्वतः।
न वा वयं मार्गभ्रष्टाः महामोहो न युज्यते'।।

बलदेवेन उक्तं, 'यदिपुनरेषः मत्स्यः स्यात् तर्हि विविधभाण्डैः पूरितां एतां नावम् अहमत्र हरामि' इति। एवं च उभयपक्षाभ्यां सत्यश्रेष्ठिनं साक्षीकृत्य पणबन्धः प्रारब्धः। ते नौनायकाः लघुयानेन गत्वा मत्स्यपृष्ठोपरि परीक्षणार्थं तृणपुञ्जं दग्धुं प्रारभन्त। स च मस्त्यः परितप्तशरीरः झटिति निमग्नोऽगाधे जले। एवं

हारितं यानपात्रं बलदेवेन, परितुष्टाः नौनायकाः शनैः शनैः स्वनगरं प्राप्ताः। तदा तैः प्रतिरुद्धं यानपात्रम् । बलदेवः च समुत्तार्य तीरे मोचितः। बलदेवेन तैः सह कलहः प्रारब्धः। यथा 'असत्याः इमे मत्स्यहारिणः किराताः। मां विजयिनं दृष्ट्वा आडम्बरम् प्रदर्शयन्ति एते, इत्युक्त्वा सः बलात्कारेण भाण्डम् उत्तारयितुं प्रारब्धवान्। नौनायकाः राजाज्ञाम् अवाहयन् न सम्मतं तद् बलदेवेन। तदा राज्ञः पुरतः द्वावपि पक्षौ उपस्थितौ। उभयोः विवदमानयोः, परमार्थमविजानन् राजा अवदत्, 'अरे, व्यवहारेऽस्मिन् कः साक्षी'। नौनायकैः उक्तं, 'देव, अस्त्येव साक्षी। परं निजसहोदरमुपेक्ष्य कोऽस्माकं साक्षी भवेत्' इति । राज्ञा पृष्टं, 'कः सः' इति। तैः उक्तं, 'सत्यश्रेष्ठी'ति। एवमुक्तः राजा तमेकान्ते स्थापयित्वा सत्यमपृच्छत्।

चिन्तितं सत्यश्रेष्ठिना स्थितावस्यां करोमि किम् ।
यद्यवितथं न ब्रुवे व्रतहीनो भवाम्यहम् ।
कथयामि यथावृत्तं बन्धुरनर्थगो भवेत् ।
जातिप्रसिद्धिद्वीनोऽपि भवाम्यहं तथा सति ।।

कार्यद्वयं समापन्नं महच्च कठिनं तथा ।
विहातुमसमर्थोऽस्मि साम्प्रतं किं करोम्यहम् ।।

अथवा

मृषावादो महापापं भवेऽसारे सुदुःखदः।
प्रतिषिद्धेषु ह्यर्थेषु मोहनं संप्रवर्धकः।।

किंबहुना –

वज्रपातेऽपि शिरसि स्वजनेऽपि पराङ्मुखे।
नालीकं हि वदिष्यामि लक्ष्मीः वास्तु पराङ्मुखी।।

इति निश्चित्य स नराधिपम् अवदत्, 'एते वराकाः नौनायकाः यद्वदन्ति तत्सत्यं मम भ्राता पुनः अलीकवादी'। श्रुत्वा इदं सन्तुष्टो राजाऽचिन्तयत्, 'अहो, अधुनाऽपि एतादृशाः सत्यवादिनः, ये नश्यति स्वभ्रातरि नियमात् सत्यात् न च्यवन्ति। तस्मात् कलिकालेऽपि विभूषितं भूमण्डलम् एवंविधैः जनैः' इति विचिन्त्य नौनायकान् आहूय अतर्जयत् 'रे दुराचाराः, सत्यमजानन् अयं श्रेष्ठी एतद् अवोचत् शब्दच्छलेन च भवन्तः अनेकभाण्डपूरितं नावं ग्रहीतुम् समुपस्थिताः,' इति निर्भर्त्स्य तेभ्यः किमपि दत्वा ते निष्कासिताः। मूल्यवत् धनं सत्यश्रेष्ठिने अयच्छत्, बलदेवाय अकथयत् च, 'मा पुनः एतादृशमकार्यं कुरु' इति।

ये सत्यवचनपराः जनपूज्याः जनाः खलु।
ते नूनं परजन्मनि निर्वाणं यान्ति लीलया।।

********

## ७. इब्भपुत्त-कहाणयं

एगंम्मि किर णयरे का वि गणिया रूववई गुणवई परिवसइ । तीसे य समीवे महाधणा रायाऽमच्च-इब्भपुत्ता उवगया परिभुत्तविहवा वच्चंति । सा य ते गमणणिच्छए पभणइ - 'जइ अहं परिचत्ता, णिग्गुणओ ता किंच सुमरणहेउं घेप्पउ ।' एवं भणिया य ते हाराऽहारद्धहार-कडग-केऊराणि तीय परिभुत्ताणि गहाय वच्चंति ।

कयाइं च एगो इब्भपुत्तो गमणकाले तहेव भणितो । सो य पुण रयणपरिक्खाकुसलो । तेण य कीसे कणयमय-पायपीढं पंचरयणमंडियं महामोल्लं दिट्ठं । तेण भणिया - 'सुंदरि ! जइ मया अवस्सं घेत्तव्वं तो इमं पायपीढं तव पादसंसग्गिसुभगं, एएण मे कुणह पसायं ।' सा भणति - 'किं एएण ते अप्पमोल्लेणं ? अण्णं किंचि गिण्हसु ।' सो विदियसारो तीए वि दिन्नं तं गहेऊणं तओ सविसए रयणविणिओगं काऊण दीहकालं सुहभाई जाओ । एस दिट्ठंतो ।

अयं उपसंहारो - जहा सा गणिया, ता धम्मसुई । जहा ते रायसुयाई, तहा सुर-मणुय-सुहभोगिणो पाणिणो । जहा आभरणाणि, तहा देसविरतिसहियाणि तवोवहाणाणि । जहा सो इब्भपुत्तो तहा मोक्खकंखिपुरिसो । जहा परिच्छकोसल्लं, तहा सम्मन्नाणं । जहा रयणपीढं, तहा सम्मद्दंसणं । जहा रयणाणि, तहा महव्वयाणि । जहा रयणविणिओगो तहा णिव्वाणसुहलाहो त्ति ।

## इभ्यपुत्रकथानकम्।

कस्मिंश्चित् नगरे काऽपि रूपवती गुणवती च गणिका वसति स्म। तस्याः समीपे महाधनाः राजा - अमात्य - इभ्यपुत्राः उपगताः परिभुक्तविभवाः गच्छन्ति स्म। गमननिश्चयेषु तेषु सा अवदत्, 'निर्गुणत्वात् परित्यक्तायां मयि, स्मरणहेतुना किमपि स्वीकर्तव्यम्।' एवमुक्ताः ते तया परिभुक्तानि हार-अर्धहार-कटक-केयूराणि गृहीत्वा अगच्छन्। कदाचित् कोऽपि इभ्यपुत्रोऽपि तया गमनकाले तथैव उक्तः। किन्तु सः पुनः रत्नपरीक्षाकुशलः। तेन तस्याः

कनकमयं पञ्चरत्नमण्डितं महार्घं पादपीठं दृष्टम्। तेन भणिता, 'सुन्दरि यदि मया अवश्यं किञ्चित् स्वीकर्तव्यं तर्हि तव पादसंसर्गसुभगेण अनेन पादपीठेन माम् अनुगृह्णातु।' सा अवदत्,'किमनेन ते अल्पमूल्येन। अन्यत् किञ्चित् गृह्णीष्व' इति। सः विदितसारः। तयाऽपि पादपीठं दत्तम् तद् गृहीत्वा, स्वप्रदेशं गत्वा, रत्नविनियोगं कृत्वा दीर्घकालं सुखभागी जातः। अयं दृष्टान्तः।

अयमुपसंहारः। यथा सा गणिका तथा धर्मश्रुतिः। यथा ते राजसुतादयः तथा सुर-मनुज-सुखभोगिनः प्राणिनः। यथा आभरणानि तथा देशविरतिसहिततपउपधानम्। यथा स इभ्यपुत्रः तथा स मोक्षाकाङ्क्षिपुरुषः। यथा परीक्षाकौशल्यं तथा सम्यग्ज्ञानम्। यथा रत्नपादपीठं तथा सम्यग्दर्शनम्। यथा रत्नानि तथा महाव्रतानि। यथा रत्नविनियोगः तथा निर्वाणसुखलाभः इति।

********

## ८. नमि-राया

करंकंडू कलिंगेसु पंचालेसु य दुम्मुहो ।
नमिराया विदेहेसु गंधारेसु य नग्गइ ।।

एए नरिंदवसहा निक्खंता जिणसासणे ।
पुत्ते रज्जे ठवेऊण सामण्णे पज्जुवट्ठिया ।।

इओ य सो बालो पउमरहराइणो निकेयणे सुहेण चिट्ठइ । पडिवक्खरायाणो तस्स राइणा नमिया । तओ राइणा गुणनिप्फन्नं बालस्स नामं कयं 'नमि' त्ति । तओ पंचधाईहिं परिवुडे सुहेण

संवड्ढइ । अट्ठवासेण अखिलो कलासत्थत्थवित्थरो दावियमेत्तो गहिओ । कमेणय जोव्वणत्थो जाओ । इक्खागकुलुब्भवाणं अमरवहु-विणिज्जिअ-रूव-सोहाणं कन्नाणं अट्ठुत्तरसहस्साणं पाणिं गाहिओ । अमरवई विव ताहिं सहिओ विसयसुइं उवभुंजमाणो गमेइ कालं । पउमरहराया वि मुणिऊण असारत्तं जवलोयस्स नमिकुमारं विदेहजणवयस्स सामित्ते ठाविऊण संजमसिरिं पाविऊण वरनाणदंसणलाहं च लद्धुं तिलोयमत्थयं गओ त्ति । नमिराया रज्जसिरिं पालेमाणो गमेइ कालो । इओ अ सो मणिरहो तीए चेव रयणीए फणिणा दट्ठो कालगओ । चउत्थीए पुढवीए नेरइओ उववन्नो त्ति । तओ चंदजसो सामंतेहिं मंतीहिं य राया ठविओ । ते य भायरो दो वि सक्कारिया । चंदजसो रज्जसिरिं पालेइ ।

अन्नया य नमिसंतिओ सयलरज्जप्पहाणो धवलहत्ती आलाणखंभं भंजिऊण विंझाडईए समुहं पत्थिओ । सो विय सुदंसणपुरस्स समीवेण वच्चइ । चंदजसराइणो तुरगवाहियालीए गयस्स दिट्ठो । मणुस्सेहिं कहिओ राइणो । तेण गहिऊण नयरं पवेसिओ तत्थ चिट्ठइ । चारपुरिसेहिं नाऊण नमिराएण साहियं, जहा - 'धवलहत्थी चंदजसेण गहिओ चिट्ठइ, देवो पमाणं' त्ति । नमीराईणा चंदजसस्स दूओ पेसिओ इमेणत्थेण । जहेस धवलहत्थी मम संतिओ, एयं पेसेह । चंदजसस्स दूएण गंतूण साहियं नमिवयणं। चंदजसेण भणियं - 'न कस्सइ रयणाणि अक्खरलिहियाणि जो चेव बलेण अहिओ भवइ तस्सेव भवंति ।' अवि य,

को देइ कस्स दिज्जइ कयागया कस्स कस्स वि निबद्धा।
विक्कमसारेहि जए भुज्जइ वसुहा नरिंदेहिं ।।

तओ असंमाणियपूइओ आगओ दूओ मिहिलं । साहियं नरिंदस्स चंदजसवयणं । कुविओ सव्वबलेण चलिओ नमि चंदजसोवरिं ।

इओ य चंदजसो नमिरायं आगच्छमाणं नाऊण बलसमग्गो नीहरंतो समुहं अवसउणेण निवारिओ । तओ मंतिहिं भणिओ चंदजसो, – 'ताव गोउराइं पिहिऊण चिट्ठसु, पुणो कालो इयं नाऊण चिट्ठिस्सामि ।' तओ राइणा 'तह' त्ति कयं । एवं च नमिराइणा आगंतूण रोहियं चउद्दिसिं नयरं । लोगपारंपरओ निसुयं सुव्वयज्जाए। चिंतियं च – 'मा जणवयक्खयं काऊण अहरगइं वच्चंतु ।' तो दो वि गंतूण उवसमावेमि । गणिणीए अणुन्नाया । साहुणि-सहिया गया सुदंसण पुरं । दिट्ठो य अज्जाए नमिराया । दिन्नं परममासणं । वंदिऊण नमी उवविट्ठो धरणीए । साहिओ अज्जाए असेससुहकारो जिणिंदप्पणीओ । धम्मकहावसाणे भणियं – 'महाराय, असारा रज्जसिरी, विवागदारुणं विसयसुहं । अइदुक्खपउरेसु विरुद्ध-पावयारिणं णियमेण नरएसु निवासो हवइ । तो एवं ठिए नियत्तसु इमाओ संगामाओ । अन्नं च केरिसो जेट्ठभाऊणा सह संगामो ।' नमिणा भणियं – 'कहं मम एस जेट्ठभाया ?' साहिओ जहट्ठिओ अज्जाए नियवुत्तंतो सपच्चओ । तहा वि माणेण न उवरमइ । तओ अज्जा खडक्कियाए नयरं पविट्ठा । गया रायगेहं । पविसमाणी सन्नाया परियणेणं । चंदजसराइणा वंदिया । दिन्नं परममासणं । उवविट्ठो राया धरणियले । निसुयं अंतेउरिया जणेण । पगलंत-अंसुधाराओ निवडिओ चरणेसु आगंतूण सो वि अज्जाए । उवविट्ठो धरणीए । भणियं चंदजसेण, अज्जे किमेय अइदुद्धरवयगहणं ? साहिओ अज्जाए नियवुत्तंतो । चंदजसेण भणियं, कत्थ सो संपयं सहोयरो

त्ति । अज्जाए भणियं, ‘जेण तुमं रोहिओ सि ।’ तओ हरिसभरुब्भंतहियओ णीहरिओ णयराओ । नमी वि सहोयरं आगच्छमाणं दट्ठूण पडियागओ संमुहं निवडिओ चलणेसु जेट्ठभाउणो। महापमोएण पवेसिओ णयरं । अहिसित्तो चंदजसेण नमी रज्जधुराए सयल अवंतिजणवयस्स सामि त्ति । चंदजसो वि समणत्तणं पडिवज्जिऊण जहासुहं विहरइ त्ति । इओ य नमिराया अइचंडसासणो दोण्हं पि विसयाणं सामित्तं नएण पालेइ । वोलिओ बहुओ कालो ।

अन्नया य नमिराइणो सरीरे छमासे जाव दाघो जाओ । विज्जेहिं पच्चक्खाओ । आलेवनिमित्तं च देवीओ वलयालंकिय-बाहाओ घसंति चंदणं । वलयसद्दझणझणारावेण आवूरिज्जइ भवणं। राया भणइ – ‘कण्णाघाओ मे होइ ।’ देवीहिं एक्केक्केण अवणहंतीहिं सव्वाणि वलयाणि अवणीयाणि । एक्केक्कं ठियं। राया पुच्छइ – ‘किं वलयाणि ण खलहलेंति ?’ साहियं जहावणीयाणि । सो तेण दुक्खेण अब्भहओ परलोगाभिमुहो चिंतेइ। बहुयाणदासो, न य एगस्स । उत्तं च,

यथा यथा महत्तंत्रं परिकरश्च यथा यथा ।
तथा तथा महद्दुःखं सुखं न च तथा तथा ।।

ता जइ एयाओ रोगाओ मुंचामि तो पव्वयामि । तया कत्तियपुण्णिमा वट्टइ । सो एव चिंततो पसुत्तो । पभायाए रयणीए सुमिणगं पासइ । मंदरोवरिं सेयं नागरायं तं च अत्ताणं आरूढं । नंदिघोसतूरेण पडिबोहिओ णिरामओ हट्ठतुट्ठो चिंतेइ – ‘अहो पहाणो सुमिणो दिट्ठो त्ति । पुणो चिंतेइ । ‘कहं मया एवंगुणजाइओ पव्वओ

दिट्ठपुव्वओ' त्ति । चिंतयंतेण जाई संभरिया । पुव्वं माणुसभवे सामण्णं काऊण पुप्फुत्तरे विमाणे उववन्नो आसी । तत्थ देवत्ते मंदरो जिणमहिमाइसु आगएण दिट्ठपुव्वो त्ति संबुद्धो पव्वइओ।

बहुयाण सद्दयं सोच्चा एगस्स य असद्दयं ।
वलय नमिराया निक्खंतो मिहिलाहिवो ।।

## नमी राजा ।

इतः च स बालः (नमी) पद्मरथराजस्य निकेतने सुखेन तिष्ठति । प्रतिपक्षराजाः तस्य, राज्ञा नमिताः। अतः पद्मरथराजेन तस्य बालस्य गुणान् ज्ञात्वा नमीति नामधेयं कृतम्। ततः सः पञ्चधात्रीभिः परिवृतः सुखेन संवर्धते। अष्टवर्षीयेण तेन अखिलकलाशास्त्रार्थविस्तरः दृष्टमात्रे गृहीतः। क्रमेण तेन यौवनं प्राप्तम्। इक्ष्वाकुकुलोद्भवाभिः अमरवधूविनिर्जितरूपशोभाभिः अष्टोत्तरसहस्राभिः कन्याभिः सह सः पाणिमगृह्णीत। सः अमरपतिरिव ताभिः सह विषयसुखमुपभुञ्जानः कालमनयत्। पद्मरथराजोऽपि जीवलोकस्य असारत्वं ज्ञात्वा नमीकुमारं विदेहजनपदस्य स्वामित्वे स्थापयित्वा, संयमश्रियं प्राप्य, वरज्ञानदर्शनलाभं च लब्ध्वा त्रिलोकमधिरूढः। राज्यश्रियं पालयन् सः कालमक्रामत्। अत्र च मणिरथनामा राजा तस्यामेव रात्रौ फणिना दष्टः, कालगतः, पृथिव्याश्च चतुर्थनरके जनिमलभत। तत्र चन्द्रयशाः सामन्तैः मन्त्रिभिश्च राजत्वेन स्थापितः। नमी चन्द्रयशाश्च द्वावपि भ्रातरौ सत्कृतौ। चन्द्रयशः अपि राज्यश्रियम् अपालयत्।

एकदा नमीराजस्य सकलराज्यप्रधानो धवलहस्ती आलानस्तम्भं भङ्क्त्वा विन्ध्याटवीं प्रस्थितः। स च सुदर्शनपुरसमीपम् अगच्छत् । अश्वारूढेन चन्द्रयशोराजेन सः दृष्टः। सेवकैः राज्ञे कथितम्। तेन गृहीत्वा नगरं प्रवेशितः तत्र तिष्ठति। चारपुरुषाः तज्ज्ञात्वा नमीराजम् अवदन् यथा – 'धवलहस्ती चन्द्रयशसा गृहीतः तिष्ठति, देवः प्रमाणम्' इति। नमीराजेन दूतः प्रेषितः यत् अयं धवलहस्ती ममाधीनः। एतं प्रेषय। दूतः नमीवचनं चन्द्रयशसेऽकथयत्। चन्द्रयशसा भणितं नैतानि रत्नानि नित्यरूपेण कस्यापि स्वामित्वे वर्तन्ते बलीयसः एव भवन्ति। अपि च –

कस्मै देया कश्च यच्छेद् कस्मादागच्छेन्नु मुधा ।
सर्वथा विक्रमसारैश्च नृपैर्भोग्या रसा सदा।। इति।

असम्मानितपूजितः दूतः मिथिलां नमीराजं प्रत्यावर्तत। अवदच्च चन्द्रयशसः वचनम्। क्रुद्धः नमीराजः सर्वबलेन सह चन्द्रयशसम् आक्रमत।

अत्र च चन्द्रयशाः नमीराजं बलेन सह आगतं ज्ञात्वा, बलसहितः गच्छन् सम्मुखम् अपशकुनेन निरुद्धः। तदा मन्त्रिणः चन्द्रयशसम् अभणन्, 'तावत् गोपुराणि पिधाय तिष्ठ, पुनः कालोचितं ज्ञात्वा तिष्ठामः इति। तदा राजा 'तथे'ति उक्तवान्। एवं नमीराजेन आगम्य चतुर्दिशासु नगरं रोधितम्। एतत्सर्वं सुव्रतार्यिका लोकपरम्परया अशृणोत् चिन्तितवती च, 'जनपदक्षयं कृत्वा अधोगतिं मा गच्छन्तु' इति। तस्माद् गत्वा द्वावपि उपशमयामि इति। गणधारिण्यः अनुज्ञया सुदर्शनपुरं साध्व्या सह अगच्छत्। सा नमीराजम् अपश्यत्। तस्यै परमासनं दत्तवान् स राजा। तां वन्दित्वा

राजा भूमौ उपाविशत्। आर्या तस्मै जिनेन्द्रप्रणीतं धर्मम् उपादिशत्। धर्मकथावसाने साऽभणत्, 'महाराज, असारा राज्यश्रीः, विपाकदारुणं विषयसुखं च । अतिदुःखप्रचुरेषु नरकेषु विरुद्धपापाचारिणां नियमेन निवासः। तस्माद् अस्यां स्थितौ निवर्तस्व अस्मात् सङ्ग्रामात्। अन्यच्च कीदृशः ज्येष्ठभ्रात्रा सह सङ्ग्रामः' इति। नमिना उक्तम् 'अप्ययं मम ज्येष्ठो भ्राता?' इति। तदा सा आर्या सप्रत्ययं निजवृत्तान्तं यथासम्भूतम् अकथयत्। तथापि वृथाभिमानेन नमीराजः नोपारमत्। आर्या पार्श्ववर्तिद्वारेण नगरं प्राविशत्। राजगृहं च अगच्छत्। प्रविशन्ती परिजनैः परिज्ञाता। चन्द्रयशोराजेन सा वन्दिता। दत्तं परमासनम्। उपविष्टः चन्द्रयशोराजः भूमौ। अन्तःपुरस्थाः जनाः एतत् श्रुतवन्तः। सोऽपि चन्द्रयशोराजः गलदश्रुभिः तस्याः पादयोः पतितः। उपाविशच्च भूमौ। भणितं चन्द्रयशसा, 'आर्ये, किमर्थम् ईदृशं कठोरव्रतम्?' इति। सा स्ववृत्तान्तमकथयत्।

चन्द्रयशाः अपृच्छत्,'साम्प्रतं कुत्र मे सः सहोदरः?' इति। आर्या प्रत्युत्तरवती 'येन भवान् निरुद्धः सः एव' इति। तदा हर्षभरेण उच्छलितहृदयः सः नगराद् बहिरगच्छत्। नमी अपि आगच्छन्तं तं दृष्ट्वा सम्मुखः अभवत् तस्य च पादयोरपतत्। अत्यानन्देन नगरं प्राविशत् नमी। चन्द्रयशसा सः नमीराजः अभिषिक्तः। राज्यधुरं तथैव सर्वजनपदस्य स्वामित्वं तस्मै अयच्छत्। चन्द्रयशा अपि श्रमणत्वं प्रतिपद्य यथासुखं विहरति स्म।

इतः च नमी अतिचण्डशासनः विषययोः स्वामित्वं नयेन अपालयत्। एवं बहुकालः व्यतीतः।

एकदा नमीराजशरीरे षाण्मासिकदाहः समजायत वैद्याः परीक्षितवन्तः। विलेपयितुं राजमहिष्यः सकङ्कणबाहुभिः चन्दनम् अघर्षयन्। 'कङ्कणनादेन पूरितं भवनम्'। राजा अवदत्, 'कर्णाघातो मे जायते' इति। देवीभिः एकैकं कृत्वा सर्वाणि कङ्कणानि दूरीकृतानि। एकैकमेव कङ्कणं स्थापितम्। राजा अपृच्छत्, 'कङ्कणध्वनिः कस्मान्नायाति' इति। श्रावितं यथा दूरीकृतानि। सः तेन दुःखेन अभ्याहतः परलोकाभिमुखः अचिन्तयत्। बहुभिः सन्तापः न एकेन। उक्तं च –

यथा यथा महत्तन्त्रं परिकरा यथा यथा।
तथा तथा महद्दुःखं सुखं न च तथा तथा।।

अस्मिन् रोगमुक्ते प्रव्रजामि। तदा कार्तिकपूर्णिमा आसीत्। एवं चिन्तयन् सः प्रसुप्तः। प्रत्यूषे स्वप्नमपश्यत्। तत्र च मन्दरपर्वते श्वेतगजे स्वमारूढम् अपश्यत्। नन्दिघोषतुर्यध्वनिना जागरितः निरामयः हृष्टतुष्टः स अचिन्तयत्, 'अहो, महत्त्वपूर्णः स्वप्नः दृष्ट' इति। पुनः अचिन्तयत्, 'अपि एतादृशः पर्वतः दृष्टपूर्वो मया' इति। एवं चिन्तयतः तस्य जातिस्मरणम् अभवत्। पूर्वं मनुष्यभवं श्रामण्यं पालयित्वा पुष्पोत्तरविमाने उपपन्नोऽऽसम्। तस्मिन् देवत्वे जिनमाहात्म्ये मन्दरपर्वतः दृष्टपूर्वः इति सम्बुध्य प्रव्रजितः।

बहूनां शब्दं श्रुत्वा एकस्य च अशब्दम् ।
वलयस्य नमिराजो निष्क्रान्तो मिथिलाधिपः।।

# ९. जहट्ठियपरूवणे– कालअकथा

अत्थि इहेव भरहद्धवासे सुरपुरिसरिच्छा तुरुमिणी णयरी । रायलच्छि–संकेयठाणं जियसत्तू राया । तस्स य भइणीए सुओ दत्तो उ(ओ)लग्गओ । सो अ जूयपसंगी मज्जपसंगी जीव–घायण–रुई अलिय–वाई परादार–सेवी पर–दव्वावहारी पिसुणो चोरो साहसिओ णीसंसो सव्वहा । किं बहुणा। जोग्गो त्ति काऊण पडिसवन्नो समत्थदोसेहिं । तेण य जियसत्तु–ओलग्गंतेणं वसीकया सव्वेवि सेवया, उव्वोसिओ राया । समहिट्ठियं अप्पणा रज्जं । रज्जाइ–निमित्तं च समाढत्ता णाणाविह–जोगा । अन्नया विहरमाणो दसविह–सामायरी–निरओ अणेय–सीस–गणि(ण)–परिवारो समोसरिओ से मामगो कालियज्जाभिहाणो णाम महरिसी । समाढत्तं वक्खाणं । धम्म–सद्धा–कोहल्लाएहि य संपत्ता नागरया । लोग–परंपराए य भाउणो आगमणं सोऊण भणिओ दत्तो भद्दाए – वच्छ ! तुह मामगो सयल–जण–सलाहणिज्जो पडिवन्न–साहुलिंगो विउसाण चूडामणी पत्तो । तव्वंदणत्थं च गया विउस–नागरया, तुमं पि गंतूण पणमसु त्ति । अवि य –

इक्कं सो तुह मामो बीयं विउसेहिं पूइओ पुन्नो ।
तइयं संगहिय–वओ ता पुत्तय नमसु तं साहुं ।।

जणणि–उवरोहेण य पयट्टो दत्तो पत्तो तं उद्देसं । पुच्छिओ कालियज्जो – 'जन्नाणं फलं किं ?' भगवया भणियं – 'पंचेंदियवहेण णरगं वच्चंति ।' पुणो वि जन्नाण फलं दुइय–वाराए पुच्छियं । भगवया वि साहिओ 'अहिंसा–लक्खणो धम्मो ।' तइय–वाराए पुट्ठेण साहियं 'पावकम्माण–णरया फलं' । चउत्थवारं रुट्ठेण

भणियं दत्तेण – 'भो ! किमेवमसमंजसं पलवसि ? जइ किं चि मुणी(ण) सि ता जन्नाण फलं साहेसु ।' भगवया भणियं – 'जइ एवं, ता णरयफला जन्ना, जेण महारंभयाए महापरिग्गहयाए कुणिमाहारेणं पंचिंदियवहेणं जीवा णरयाउयं कम्मं बंधंति । पयाणिय जन्न-करणे संति' त्ति । उक्तं च –

षट्शतानि नियुज्यंते पशूनां मध्यमेऽहनि ।
अश्वमेधस्य वचनात् न्यूनानि पशुभिः त्रिभिः ।।

संजायरोसेण भणियं दत्तेण – 'कहं वियाणेसि ? जहा णरय-फला जन्ना ।' भगवया भणियं – 'णाणाइसयाओ ।' दत्तेण भणियं – 'को पच्चओ ?' मुणिणा भणियं – 'सत्तम-दियहे कुंभी-पागेण पच्चिहिसि ।' तेण भणियं 'इत्थ को पच्चओ ?' साहुणा भणियं – 'तम्मि चेव सत्तम-दिणे पढमं असुइणा विट्टलिज्जिहिसि।' समुप्पन्नकोवानलेण य पुणो वि भणियं दत्तेण । 'कत्तो तुहमच्चु ?' मुणिणा भणियं – 'णिरुवसग्गत्तणेणं पभूय-कालं काऊण पव्वज्जं पंचनमोक्कारपरो णियय-मच्चूणा मरिऊण देवलोगं गमिस्सामि ।' तओ आणत्ता पुरिसा – 'एयं पव्वाइयाहममसच्च-वयणं सुरक्खियं करेज्जह, जेण सत्तम-वासरे एयं चियं(य) कुंभीए पयामि ।' णियमिऊण आरक्खियनरे पविट्ठो धवलहरं दत्तो । दव्वाविओ पडओ – ण सत्तवासराणि जाव णयरी(ए) पुरीसो उज्झियव्वो । सत्तमदिणेण असहिण्णुण्हा मालायारेण राय-मग्गे उज्झिऊण पुरीसं ठइयं पुप्फकरंडएणं । वोलीणाणि सत्त-वासराणि सम्ममयाणंतो सत्तमे च्चिय वासरे आसवड(र)रेण पयट्टो । साहू-वहाय, तुरियं तुरि(र)य-खुर-क्खवएण य असुइणा विट्टालिओ हसंतो पहे, 'अहो ! सा च इओ पावि-समणगस्स आएसो ।' मन्नमाणो भयभीओ पयट्टो

नियगिहाभिमुहं । तत्थ पविट्ठो दूसज्झो भविस्सइ त्ति मन्नमाणेहिं विरत्त-चित्तेहिं सेस-भडेहिं बंधेऊण पुव्वाणिय-जियसत्तुणो समुवणीओ दत्तो । तेण वि तेल्लापुन्न-मंडल-सणाहाए कवल्लीए छोढूण ए(प)क्को दोक्ख-मच्चुणा य मओ समाणो गओ णरगमिति । कालगो वि बोहिऊण भव्व-कमलायरे विहरिऊण णिरुवसग्गं काऊणमकलंक-सामन्नं काल-मासे परिचत्त-सयलाहारो णमोक्कार-परो उज्झिऊण-पूई कडेवरं गओ सुरलोगं ।

अओ जहा कालगेण अवितहं भणियं, तहा भणियव्वं ।

सुयदेवि-पसाएणं सुयाणुसारेण कालय-कहाणं ।
कहियं जो मुणइ णरो सो पावइ णिरुवमं ठाणं ।।

सम्यग्वादस्य हि विरागताफलम् । यत् उक्तम् - ज्ञानस्य फलं विरतिः इति । तथा अन्यैरप्युक्तम् -

तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति राग-गणः ।
तमसः कुतोऽस्ति शक्तिर्दिनकरकिरणाग्रताः स्थातुं?।।

यस्तु रागवान् स कार्यमकार्यं वा न प्रेक्षत इत्याह -

रागानल-संतत्तो कज्जमकज्जं पिच्छए पुरिसो ।
राय-महिला य(इ) रत्तो महुराए वणिय-तणउ व्व ।।

## यथास्थितप्ररूपणे कालककथा ।

अस्ति इहैव भारतवर्षे सुरपुरीसदृशी तुरुमिणी नाम नगरी। राजलक्ष्म्याः आविष्कारो नाम जितशत्रुः राजा। तस्मिन् प्रदेशे तस्य

भागिनेयः दत्तः सेवायां नियुक्तः। स च द्यूतसेवी, मद्यसेवी, जीवघातरुचिः, अलीकवादी, परदारसेवी, परद्रव्यापहारी, मायावी, पिशुनः, चोरः, साहसिकः, नृशंसश्च सर्वथा। किं बहुना, योग्येति मत्वा समर्थदोषैः सह स्वीकृतः। जितशत्रुं सेवमानेन तेन सर्वे सेवकाः वशीकृताः राजा च उद्वासितः। समधिष्ठितं जितशत्रुराज्यम्। राज्यनिमित्तं च समारब्धाः नानाविधव्यापाराः। कस्मिंश्चिद् दिने विहरमाणः दशविधसामाचारिनिरतः अनेक-शिष्य-गणी-परिवारः कालिकार्यनामा महर्षिः। तस्य मातुलः समोशरणां नाम धर्मसभाम् आयोजयत्। समारब्धं व्याख्यानम्। धर्म-श्रद्धा-कुतूहलैः सम्पन्नाः नागरिकाः। जनवार्तया भ्रातुः आगमनं श्रुत्वा दत्ताय तस्य माता भद्रा उक्तवती, 'वत्स, तव मातुलः सकलजनश्लाघनीयः प्रतिपन्नसाधुलिङ्गः विदुषां चूडामणिः सम्प्राप्तः। तस्य वन्दनार्थं गताः सर्वे विद्वांसः नागरिकाश्च त्वमपि गच्छ वन्दस्व च' इति। अपि च

कालिकार्यो मातुलस्ते मान्यो विद्वत्सु पूजितः ।
संगृहीतव्रती पुण्यः तस्मात्वन्दस्व तं हि त्वम् ।।

जनन्युपरोधेन प्रवृत्तः सः दत्तः तं प्रदेशम् अगच्छत् अपृच्छच्च कालिकार्यं, 'यज्ञफलं किमि'ति। भगवान् अवदत् यत् पञ्चेन्द्रियवधेन निरयं गच्छन्ति। द्विवारं यज्ञफलमपृच्छत्। भगवान् अवोचत्, 'अहिंसा परमो धर्म' इति। त्रिवारं पृष्टं तदा 'पापकर्मणः नरकफलम्' इति उक्तम्। चतुर्थवारं रुष्टेन भणितं दत्तेन- 'भोः किमेवम् असमञ्जसं प्रलपसि। यदि किञ्चिज्जानासि तर्हि यज्ञफलं कथय' इति। भगवता उक्तं, 'यद्येवं तर्हि नरकफलाः यज्ञाः यैः महाहिंसया, महापरिग्रहेण, कुणपाहारेण पञ्चेन्द्रियवधेन च जीवाः

नरकायुःकर्मणा बध्यन्ते। नश्यति च शान्तिः यज्ञकर्मणा' इति। उक्तं च –

षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य वचनात् न्यूनानि पशुभिः त्रिभिः।।

क्रुद्धः दत्तः अभणत्, 'कथं विजानासि, यथा 'नरकफलाः यज्ञाः' इति। भगवान् उक्तवान्, 'ज्ञानातिशयात्'। दत्तः पृष्टवान्, 'का प्रतीतिः' इति। मुनिरवदत् – 'सप्तमे दिने कुम्भीपाके (नरके) प्रत्येष्यसि' इति। दत्तः अपृच्छत्, 'अत्र का प्रतीतिः' इति। साधुरभणत् यत् तस्मिन्नेव सप्तमे दिने अशुच्या अपवित्रो भवसि। कोपानलयुक्तः दत्तः अपृच्छत्, 'मृत्युः कुतः तव' इति। मुनिना उक्तं, 'निरुपसर्गत्वेन प्रभूतकालं प्रव्रज्य पञ्चनमस्कारपरः उचितकाले प्रेत्य देवलोकं गमिष्यामि' इति। दत्तः अधिकारिणः उक्तवान् यद् अयं प्रव्रजितः अधमः असत्यवचनः भवद्भिः सुरक्षितव्यः, येन सप्तमे वासरे एनमेव कुभीं प्रेषयामि। एवम् अधिकारिणः नियुज्य दत्तः धवलगृहं प्राविशत्। पटहोऽपि दापितः उद्घोषितं च 'सप्तवासरं यावत् पुरीषं न विसर्जयितव्यम्' इति। सप्तमे दिने असहिष्णुना मालाकारेण राजमार्गे पुरीषं विसृज्य पुष्पकरण्डके स्थापितम्। अतीतानि सप्तदिनानि इति सम्यग् न जानन् सः दत्तः सप्तमे एव दिने असिं गृहीत्वा साधुवधाय प्रस्थितः। हसन् त्वरया गच्छन् सः अशुच्या अपवित्रो जातः। पथि हसन् 'सत्यतामापन्नः पापश्रमणकस्य आदेशः' इति मन्यमानः सः भयभीतः स्वगृहं प्रतिनिवृत्तः। तत्र प्रविष्टो दुःसाध्यो भवेद् इति मत्वा खिन्नमनसा शेषभटैः बन्दीकृतः सः दत्तः यत्र पूर्वागतः जितशत्रुः आसीत् तत्र समुपनीतः। स दत्तः।

तैलपूर्णकटाहनिक्षिप्तकपर्दिकमिव मृत्युमार्गेण नरकमगच्छत् कालकाचार्योऽपि बोधिं प्राप्तः। भव्यकमलाकरे निरुपसर्गं विहृत्य अकलङ्कं श्रामण्यं पूरयित्वा यथाकाले मासे च परित्यक्त-सकलाहारः, नमस्कारपरः पूतिकलेवरमुज्झित्वा सुरलोकं गतः।

अतः कालकमिव अवितथं भणितव्यम्।

श्रुतदेवीप्रसादेन यथाश्रुतं कथानकम् ।
तद्विज्ञाय नरो धीमान् स्थानं गच्छेत् निरुपमम् ।।

********

## १०. जयसुंदरीए चउरत्तणं

अह सुंदरो नाम सत्थवाहो णीय-पुरीए जयंतीए गंतुकामो वि आसन्नो पाउसोत्ति ठिओ तत्थेव कंचणउरे । के वि सत्थिया पत्थिया। तओ सुंदरो दामोयरं विप्पं भणइ - 'जयंतीए णयरीए सिरी पासणाह-जिणालयस्स समीवे महजणणी धणसिरी घरिणी य जयसुंदरी वसंति । इमाणि सत्तरयणाणि ताणं अप्पेज्जसु ।' एवं भणिऊण सुंदरेण दामोयरस्स सत्तरयणाइं दिन्नाइं ।

दामोयरो जयंतीए पत्तो । लोह-दोसाओ उण तेण रयणाइं न दिन्नाइं ।

सुंदरेण स-संकेण सुसेण-वणिग-हत्थेण लेहो पेसिओ । दामोयर-बंभण-पासाओ सत्तरयणाइं घेत्तव्वाइं त्ति ।

तओ तं लेहं घेत्तूण गया दामोयर-समीवं धणसिरी जणणी । दंसिऊण लेहं मग्गिओ सो रयणाणि ।

दामोयरेण वुत्तं - 'न सुंदरेण मम हत्थे पेसियाणि रयणाणि । एस पुण लिहिओ केणावि कूड-लेहो ।'

तओ दुक्खियमणेण आगया गिहं धणसिरी । भणिया तीए जयसुंदरी वहुया - 'वच्छे, चलिय चित्तो बंभणो । ता कस्स वि पहाणपुरिसस्स कहिऊण गिण्ह रयणाइं ।'

'जं अंबा आणवेइ' त्ति वुत्तूण भुत्तुत्तरं गया णयरसेट्ठिसमीवं जयसुंदरी कहिओ तस्स रयण-वुत्तंतो । तेणावि तीए रूव-लुद्धेण भणिया सा- 'भद्दे, जइ मह विसय-सोक्खं देसि, तो ते कज्जं करेमि।'

तीए चिंतिऊण भणियं - 'जइ एवं, ता तुमए जामिणी पढमजामे मम गिहे आगंतव्वं ।'

तओ सा गया पुरोहियपासे । तस्स वि सेट्ठि-सरिसो समुल्लाओ । 'रयणीए बीय-जामे आगंतव्वं' त्ति तस्स कहियं ।

अणंतरं गया अमच्च-सगासं । सो वि पुरोहिणेव पढिओ । 'तइय-जामे एज्जसु' त्ति तस्स कहियं ।

तओ गया सा रन्नो पासे । रन्ना वि विसयसुहं मग्गियं । 'चउत्थ-जामे जामिणीए सामिणा आगंतव्वं' त्ति भणिऊण जयसुंदरी नियगेहं गया ।

साहिओ सासुयाए तव्वुत्तंतो । सासुया भणइ – 'जत्थ कारण-पुरिसा वि एरिसा, तत्थ केरिसी रयणा सा?'

तओ जयसुंदरी भणइ – 'संति एयाओ चउदिसासु पुरिस-पमाणाओ चत्तारि-मंजूसाओ । ताओ रित्ती-कयाओ ।' ताहि तहेण कयं ।

संझाए जयसुंदरीए सज्झियं सयण-मंदिरं । रयणीए पढम-पहरे आगओ णयरसेट्ठी । जयसुंदरीए तस्स सागयं काऊण सो नीओ सेज्जा-घरे । पारद्धा पणय-कहा ।

इत्थंतरे पत्तो तत्थ पुरोहिओ । भणियमणेण – 'सुंदरि, उग्घाडेसु दुवारं ।'

'को एस ?' त्ति तीए पुट्ठं ।

सेट्ठिणा भणियं – 'पुरोहिओ व्व लक्खीयइ ।' पुणो तेण सा पुट्ठा – 'अत्थित्थ किंचि निलुक्कणठाणं?'

तीए दंसिया उत्तरदिसाए संठिया मंजूसा । तीए मंजूसियाए पविट्ठो नयर-सेट्ठी । जयसुंदरीए दिन्नं तालयं उग्घाडियं च दुवारं । पवेसिओ पुरोहिओ । तीए तस्स उचियं सागयं काऊण सेज्जाघरे नेऊण सो निवेसिओ मंचए । तहेव पारद्धा सिंगार-कहा ।

इत्थंतरे पत्तो तत्थ अमच्चो । तेण वि दुवारं उग्घाडेउं कहियं। सा भणइ – 'को एसो ?' पुरोहिओ साहेइ 'अमच्चो व्व नज्जइ । अत्थित्थ किंचि नासणट्ठाणं ?'

तीए दंसिया पच्छिमदिसाए संठिया मंजूसिया । तत्थ पविट्ठो पुरोहिओ । दिन्नं तहेव तालयं । पवेसिओ अमच्चो । तस्स वि कओवयोरो पारद्धा पणयकहा । थेव वेलाए आगओ राया । सो भणइ – 'उग्घाडेहि दुवारं ।'

सा पुच्छइ – 'को एसो ?'

अमच्चेण कहियं – 'रायव्व लक्खीयइ । दंसेहि नासणट्ठाणं।' दंसिया तीए दक्खिणदिसाए मंजूसिया । तीए पविसइ अमच्चो । तीए दिन्नं तालयं ।

सा राइणो सक्कारं करेइ आणेइ य सयण-घरे । राया मंचए उवविसइ । जयसुंदरीए तस्स तंबूलं दाऊण पारद्धा पणयकहा । इत्थंतरे गहिय-संकेया आगया तीए सस्सू । सा भणइ – 'वच्छे, उग्घाडेसु दुवारं ।' रन्ना पुट्ठो – 'का एसा ?'

तीए कहियं – 'मह सासुया ।'

रन्ना वुत्तं – 'दंसेहि कं पि ठाणं । खण-मित्तं ओसरामि ।' तस्स दंसिया पुव्वदिसाए संठिया मंजूसा । पविट्ठो तत्थ राया । दिन्नं तालयं ।

एयावसरे पहाया रयणी । बहुं गले घेत्तूण परुन्ना धणसिरी । मिलिओ लोगो । आगओ तलारो । पुच्छिया तेण – 'किमेयं' त्ति । धणसिरीए कहियं – 'मम एगो पुत्तो सो वि देसंतरे पत्तो पंचत्तं ।'

तओ तलारो गओ रायउलं । नत्थि राय त्ति गओ अमच्चगेहं। अमच्चो वि नत्थि त्ति गओ पुरोहिय-गेहं । सो वि नत्थि त्ति गओ नयर-सेट्ठि-घरं । सो पि तत्थ नत्थि ।

तओ तलारो तुरियं पंचउलस्स समीवं गंतूण सव्वं कहियं । पंचउलं आगयं गिहे ।

निरुव्विऊण-घर-सारं इक्केण पंचेण भणिया धणसिरी - 'भद्दे, तुह गेहे नत्थि संभावणा न य किं पि दीसइ ।' तीए कहियं - 'देसंतरं वच्चंतेण पुत्तगेण एयाओ चत्तारि मंजूसियाओ जत्तेण रक्खियव्वाओ' त्ति कहियं ।

पंचउलेण चिंतियं एयासु मंजूसासु संभाविज्जइ घर-सारं । ताओ मंजूसाओ चालिउं पि न तीरइ त्ति पुच्छिया जयसुंदरी वहु - 'किं कारणं जं एत्थ बहुओ भारो ?' जयसुंदरी भणइ - 'अज्ज रयणि-विरामे मए सुविणे चत्तारी लोगपाला गिहागया दिट्ठा । ते पि पुव्वं-दाहिणावर-उत्तरं-दिसासु इक्केक्के मंजूसियाए पविट्ठा । जइ सच्चो एस सुमिणो तो तप्पाभवेण भारो संभाविज्जइ ।'

राय-पुरिसेहिं चडावियाओ चत्तारी गड्डीसु ताओ मंजूसियाओ । नेऊण य मुक्काओ करणसालाए पुरओ । मिलियाइं तत्थ बहुयाइ बालय-इत्थिपुरिसाइं । पंचउलेण मग्गिया धणसिरी कुंचियाओ । उग्घाडियाइं तालयाइं । एगाओ मंजूसाओ नव-वहु व्व पच्छन्न-मुहो अहो-निविट्ठ-दिट्ठी निग्गओ राया । दुइयाओ अमच्चो, तइयाओ पुरोहिओ, चउत्थाओ य नयरसेट्ठी । सव्वे वि वेगेण धावंता गया निय-निय-ठाणेसु ।

सव्वे जणा विम्हिया जाया । पंचउलेण भणियं – 'किं सच्चं इमे रायामच्चपुरोहियसेट्ठिणो ? किं वा इंद–जालमिमं ?' पंचउलेण पुट्ठा जयसुंदरी – 'को एस वुत्तंतो ?'

तीए साहियं – 'घरे चेव साहिओ सुमिणो, लोगपाला मंजूसियासु पविट्ठ त्ति । सो सच्चो संभाविज्जइ ।'

पंचउलेण चिंतियं – 'अलं इमीणा वियारेण । इमम्मि विसए अहियं गवेसणं काउं न जुज्जइ ।' तओ सक्कारं काऊण मंजूसाहिं सह पेसियाओ ताओ सस्सू–वहुओ ।

एगंते रन्ना भणिओ तलारी – 'गिहे गंतूण भण जयसुंदरी । जहा रयणाणि लहसि तहा करिस्सामो । परं एस णिसावुत्तंतो कस्स वि ण कहेयव्वो ' तहेव कयं तलारेण । जयसुंदरीए पडिवन्नं । रायाएसेण अमच्चेण कोहाहिभूएण भणिओ दामोयरो – 'राइणा आएसो दिन्नो । परसंतियाणि रयणाणि हरंतस्स ते सुमरियं कयंतेण । ता लहुं समप्पेहि जयसुंदरीए ताइं सत्तरयणाइं ।'

तेणावि राय–भएण दिन्नाइं रयणाइं।<br>
सस्सू–वहुयाओ आणंदियाओ जायाओ ।।

## जयसुन्दरीचातुर्यम्।

अथ स्वनगरीं जयन्तीं गन्तुकामः सुन्दरो नाम सार्थवाहः आसन्नं प्रावृट्कालं दृष्ट्वा तत्रैव काञ्चनपुर्यामतिष्ठत्। केचित् सार्थवाहाः प्रस्थिताः। तदा सुन्दरः दामोदरनामानं ब्राह्मणमवदत्, 'जयन्तीनगर्यां श्रीपार्श्वनाथजिनालयसमीपं मम जननी धनश्रीनाम्नी

तथा गृहिणी जयसुन्दरी च वसतः। इमानि सप्तरत्नानि ताभ्यां यच्छ' इत्युक्त्वा सुन्दरः दामोदराय सप्तरत्नान्ययच्छत्।

दामोदरः जयन्तीं प्राप्तः। लोभदोषेण सः रत्नानि जयसुन्दर्यै नायच्छत्।

साशङ्केन सुन्दरेण सुषेणवणिग्घस्तेन पत्रं प्रेषितम् यत् दामोदरब्राह्मणसकाशात् सप्त रत्नानि ग्रहीतव्यानि इति। तदा तत्पत्रं गृहीत्वा माता – धनश्रीः दामोदरसमीपं गता। पत्रं दर्शयित्वा सा रत्नानि अयाचत। दामोदरेणोक्तं, 'न मम हस्ते रत्नानि प्रेषितानि सुन्दरेण। एषः पुनः केनापि लिखितः कूटलेखः' इति।

ततः दुःखितमनसा धनश्रीः गृहमागता। जयसुन्दरीं वधूं सा अवदत्,'वत्से, लोभेन चलितचित्तः स ब्राह्मणः। तर्हि कस्मै अपि प्रधानपुरुषाय कथयित्वा रत्नानि प्रापय' इति।

'यथा अम्बा आज्ञापयति' इत्युक्त्वा नगरश्रेष्ठिसमीपं जयसुन्दरी गता। भोजनोत्तरं कथितः च तस्मै रत्नवृत्तान्तः। तस्याः सौन्दर्येण लुब्धः सः अवदत्, 'भद्रे, यदि विषयसुखं दास्यसि, तर्हि तव कार्यं करिष्यामि' इति।

सा चिन्तयित्वा उक्तवती, 'यदि एवं तर्हि रात्रौ प्रथमप्रहरे मम गृहमागन्तव्यम्' इति।

ततः सा पुरोहितं प्रति गतवती। तत्रापि संवादः श्रेष्ठिसदृशः। 'रात्रौ द्वितीयप्रहरे आगन्तव्यम्' इति तस्मै कथितम्।

अनन्तरं सा अमात्यसमीपं गता। सोऽपि पुरोहित इव अवदत्। 'तृतीयप्रहरे आगन्तव्यम्' इति तम् अभणत्।

तदा सा राजानम् अगच्छत्। राजाऽपि विषयसुखम् अयाचत। 'चतुर्थप्रहरे स्वामिना आगन्तव्यम्' इति उक्त्वा सा निजगेहम् अगच्छत्।

श्वश्वे तं वृत्तान्तमकथयत्। श्वश्रूः अवदत्, 'यत्र एतादृशाः प्रधानपुरुषाः तत्र का आशा रत्नानाम्' इति।

तदा जयसुन्दरी अवदत्, 'अत्र चतुर्षु दिक्षु पुरुषप्रमाणाः चतस्रः मञ्जूषाः। ताः रिक्ताः कुर्वः।' ताभ्यां तथैव कृतम्।

सायङ्काले जयसुन्दर्या शयनमन्दिरं सज्जं कृतम्। रात्रौ प्रथमप्रहरे नगरश्रेष्ठी आगच्छत्। तस्मै स्वागतं विधाय जयसुन्दरी शयनमन्दिरं तम् अनयत्। प्रारब्धा प्रणयकथा।

अत्रान्तरे प्राप्तः तत्र पुरोहितः। भणितं तेन,'सुन्दरि, द्वारमुद्घाटय' इति।

'क एष' इति साऽपृच्छत् ।

श्रेष्ठी अवदत्, 'पुरोहित इव लक्ष्यते' इति। सः पुनरपृच्छत्, 'अपि वर्तते अत्र गूहनस्थानम्' इति।

उत्तरदिग्वर्तिनीं मञ्जूषां साऽदर्शयत्। तस्यां मञ्जूषायां स श्रेष्ठी प्राविशत्। जयसुन्दरी तालकं संस्थाप्य द्वारम् उद्घाटितवती।

प्रावेशयत् च पुरोहितम्। सा तस्य यथोचितं स्वागतं विधाय तं शय्यागृहं नीत्वा मञ्चके उपावेशयत्। तथैव शृङ्गारकथा आरब्धा।

अत्रान्तरे तत्र अमात्यः प्रविष्टः। सोऽपि द्वारम् उद्घाटयितुं न्यवेदयत्। सा अपृच्छत्,'क एष' इति।

पुरोहितः अवदत् 'अमात्य इव ज्ञायते । अप्यस्ति अत्र गूहनस्थानम्' इति।

सा पश्चिमदिग्वर्तिनीं मञ्जूषाम् अदर्शयत्। तत्र प्रविष्टः पुरोहितः। यथापूर्वं तालकं स्थापितवती। प्रावेशयत् अमात्यम्। तस्मै अपि स्वागतं विधाय प्रारब्धा प्रणयकथा। स्तोकवेलायां राजा आगतः। सोऽवदत्,'द्वारम् उद्घाटय' इति।

सा पृष्टवती 'क एष' इति।

अमात्यः अभणत् यद् राजा इव लक्ष्यते। निह्नवस्थानं दर्शय। सा दक्षिणदिग्वर्तिनीं मञ्जूषाम् अदर्शयत्। अमात्यः तस्यां प्राविशत्। सा तालकं स्थापितवती।

सा राजसत्कारं विधाय तं शयनगृहम् अनयत्। राजा मञ्चके उपाविशत्। जयसुन्दरी तस्मै ताम्बूलं दत्त्वा प्रणयकथां प्रारब्धवती। अत्रान्तरे गृहीतसङ्केता तस्याः श्वश्रूः आगच्छत्। सा उक्तवती, 'वत्से,द्वारमुद्घाटय' इति।

राज्ञा पृष्टं यत् का एषा।

तया उक्तं, 'मम श्वश्रूः' इति।

राजा अवदत् यत्, दर्शय किमपि स्थानम्। क्षणमात्राद् अपसरामि। तस्मै पूर्वदिग्वर्तिनीं मञ्जूषाम् अदर्शयत् । प्रविष्टः तत्र राजा। तालकेन पिहिता मञ्जूषा।

अत्रान्तरे अपगता रजनी प्रत्यूषसमयश्च सञ्जातः। वधूम् आलिङ्ग्य अरोदीत् श्वश्रूः। जनाः सम्प्राप्ताः। ग्रामाधिकारी अपि अगच्छत् पृष्टं तेन,'किमेतदि' ति।

धनश्रीः उक्तवती यत् मम एकः पुत्रः। सः देशान्तरे पञ्चत्वं गतः।

तदा ग्रामाधिकारी राजगृहम् अगच्छत्। असति राजनि सः अमात्यम् अगच्छत्। अमात्योऽपि नासीद् अतः पुरोहितगृहं गतः। तस्मिन्नपि असति नगरश्रेष्ठिगृहम् अगच्छत्। सोऽपि नासीत् तत्र।

स ग्रामाधिकारी त्वरितं पञ्चकुलं गत्वा न्यवेदयत्। पञ्चकुलं तस्याः गृहमागतम्। गृहसारं निरीक्ष्य पञ्चकुलेषु एकः धनश्रियमपृच्छत्। 'भद्रे, तव गृहे काऽपि अर्थसम्भावना न दृश्यते।' तया कथितं, देशान्तरं गच्छन् पुत्रः अवदत् यत् एताः चतस्रः मञ्जूषाः प्रयत्नेन रक्षितव्याः।

पञ्चकुलेन चिन्तितं यद् एतासु मञ्जूषासु गृहसारं स्यात्। ताः मञ्जूषाः वाहयितुम् असमर्थाः ते जयसुन्दरीम् अपृच्छन्, 'किं कारणमस्य महाभारस्य' इति।

जयसुन्दरी भणति, 'अद्य रजनीविरामे मया स्वप्ने चतुर्लोकपालाः गृहागताः दृष्टाः। ते पूर्वदक्षिणापरोत्तरदिक्षु एकैकस्यां

मञ्जूषायां प्राविशन्। स्वप्ने सत्ये सति, महाभारः स्यात्' इति जयसुन्दरी उक्तवती।

राजपुरुषाः ताः चतस्रः मञ्जूषाः वाहने ऊढ्वा न्यायशालायाः पुरतः अवातारयन्। तत्र बहु सम्मर्दः जातः। पञ्चकुलेन कुञ्जिकाः याचिताः। उद्घाटितानि तालकानि। एकस्याः मञ्जूषायाः नववधूरिव प्रच्छन्नमुखः अधोनिविष्टदृष्टिः निर्गतः राजा। द्वितीयाया अमात्यः। तृतीयायाः पुरोहितः चतुर्थीतश्च नगरश्रेष्ठी। सर्वेऽपि त्वरेण धावन्तः स्वस्थानं गताः।

सर्वे जनाः विस्मिताः। पञ्चकुलेन पृष्टम्, 'अपि एते राजामात्यपुरोहितश्रेष्ठिनः अथवा इन्द्रजालमेतद्' इति। पञ्चकुलेन जयसुन्दरी पृष्टा यत् कोऽयं वृत्तान्तः। सा उक्तवती,'गृहे एव मया कथितं यत् स्वप्ने आसु मञ्जूषासु चतुर्लोकपालाः प्रविष्टा इति। स सत्यताम् आयत इति मन्ये।

पञ्चकुलेन चिन्तितं यद् अलम् अनेन विचारेण। अस्मिन् विषये अधिका गवेषणा न कार्या। तदा सत्कृतिं विधाय ते श्वश्रूवधू गृहं प्रेषिते पञ्चकुलेन।

एकान्ते राजा ग्रामाधिकारिणम् अवदत्,'तस्याः गृहं गत्वा जयसुन्दर्यै कथय यत् यथा रत्नानि लभेरन् तथा करिष्यामि। परन्तु निशावृत्तान्तः कस्मै अपि न कथनीयः।

तथैव ग्रामाधिकारिणा कृतम्। जयसुन्दरी अमन्यत। अतिक्रुद्धः अमात्यः राजादेशम् अकथयत् दामोदराय। राजा

आदिशति यत् पररत्नानि हरतः तव कृतान्तेन स्मरणं कृतम्। तदा शीघ्रं तस्यै जयसुन्दर्यै तानि सप्तरत्नानि यच्छ।

दामोदरः राजभयात् ददौ रत्नानि सुन्दर्यै।
चातुर्यप्राप्तरत्नेभ्यः हृष्टे श्वश्रूवधू ततः।।

********

## ११. भोयणाइरेगो

अत्थि वच्छ-विसए कोसंबी नाम नयरी । तहिं सयाणिओ नाम नरवई । साडुयगो नाम बंभणो । सो य जम्माओ च्चिय अइ-दरिद्दोवद्दव-पीडिओ कह-कहवि भिक्खा-वित्तीए कालं गमेइ ।

अन्नया खरमुही-नामाए भज्जाए भणिओ एसो - 'भो नाह, आसन्नो मह पसय-समओ । नत्थि घरे घय-तंदुलाइं । ता कीस निच्चिंतो चिट्ठसि?'

तेण भणियं - 'पिए, पइ-दिणं भिक्खा-भमणेण नट्ठा मे बुद्धी । ता तुमं चेव साहेसु को एत्थ पत्थावे दव्वज्जणोवाउ ?' त्ति।

तीए भणियं - 'गच्छ, पत्थिव ओलग्गेसु सव्वायरेण । न धणेण विणा अवणिज्जइ दालिद्दं ।'

'एवं करिस्सामि' त्ति वोत्तूण सो पइ-दिणं कुसुम-हत्थो पत्थिवं ओलग्गिउमाढत्तो ।

अन्नया अणुकूलयाए विहिणो तस्स विणयं अवलोइऊण तुट्ठो राया । भणियं च तेण - 'भो बंभण, मग्गसु जहिच्छियं ।'

बंभणेण भणियं – 'देव, बंभणिं आपुच्छिऊण मग्गामि ।'

अणुमग्गिओ रन्ना गओ गेहम्मि । तेण भणिया बंभणी – 'पिए, तुट्ठो राया । ता साहेसु किमिहं पत्थेमि?'

तीए भणियं – 'पइ-दिवसमग्गासणे भोयणं दिणारं च दक्खिणाए पत्थेहि ।'

पडिस्सुयमणेण । निवेइयं च एयं रन्नो । पडिवन्नं च तेण । एवं राइणा पुरओ अणुदिणं भुंजमाणो जाओ सो महाधणो ।

एसाणुवित्तीए पइ-दिणमामंतिज्जइ भोजण-करणे मंतिसामंतेहिं । दक्खिणालोभेण य सो गले अंगुलि-पक्खेव-पुव्वयं पुव्व-भुत्त-भोयणं वमिऊण पुणो पुणो अवरावर-गिहेसु भुंजमाणो गहिओ कुट्ठवाहिणा । सभिन्ना सव्वे वि तस्स सरीरावयवा । दुद्दंसणो त्ति पडिसिद्धो राइणा । तट्ठाणे पइट्ठिओ से जेट्ठ-पुत्तो ।

## भोजनातिरेकः।

अस्ति वत्सप्रदेशे कौशाम्बी नाम नगरी। तत्र शतानीको नाम नरपतिः। शाटूयको नाम ब्राह्मणः। आ जन्मनः दरिद्रः सः भैक्ष्यवृत्त्या यथाकथञ्चित् कालं यापयति स्म।

एकदा 'खरमुखी' नाम्नी तस्य भार्या तम् अवदत्, ''भो नाथ, आसन्नः मम, प्रसवसमयः। न सन्ति गृहे घृततण्डुलाः । तर्हि किमिति निश्चिन्त इव तिष्ठसि' इति।

तेन उक्तं, 'प्रिये, प्रतिदिनं भिक्षाभ्रमणेन नष्टा मे बुद्धिः। तर्हि त्वं हि अत्र कथय द्रव्यार्जनस्य कमपि उपायम्' इति।

सा उक्तवती, 'गच्छ, सम्पूर्णशरणगत्या राजानं परिचर। न धनेन विना दारिद्र्यं अपगच्छेद्' इति।

'एवं करिष्यामि' इत्युक्त्वा कुसुमहस्तः सः पार्थिवस्य परिचर्यां प्रारभत।

एकदा दैवानुकूलतया तस्य विनयं च अवलोक्य तुष्टः राजा। भणितं च तेन, 'भो ब्राह्मण, यथेच्छं याचस्व' इति।

ब्राह्मणेन उक्तं,'ब्राह्मणीं पृष्ट्वा कथयामि' इति।

राज्ञा अनुज्ञातः सः गृहमगच्छत्।

सः ब्राह्मणीम् उक्तवान्,'सन्तुष्टो राजा तर्हि भण, किमधुना प्रार्थये' इति।

तया कथितं,'प्रतिदिनम् अग्रासने भोजनं, दक्षिणायां दीनारं च याचस्व' इति।

प्रतिश्रुतमनेन निवेदितं च राज्ञे। स्वीकृतं च राज्ञा।

एवं प्रतिदिनं राज्ञः पुरतः भुञ्जानः सः महाधनी अभवत्।

प्रतिदिनं सामन्तमन्त्रिभिरपि सः आहूतः। राजानुकरणं च कृतं तैः। दक्षिणालोभेन सः कण्ठे अङ्गुलि-निधाय पूर्वभुक्तभोजनं वमित्वा अन्यान्यगृहेषु भुञ्जानः कुष्ठरोगग्रस्तोऽभवत् । तस्य सर्वे शरीरावयवाः

गलिताः । अशुभदर्शनपरिहारार्थं प्रतिषिद्धः राज्ञा। तत्स्थाने तस्य ज्येष्ठपुत्रं नियुक्तवान् राजा।

*********

## १२. अप्पादमणे सिद्धअकहा

सज्झगिरिम्मि कोंकणय-नयरे समारोविय-गुरुभारे आरुहंति अवयरंते य दट्ठूणाणुकंपाए राइणा तेसिं वरो दिन्ना - 'मए वि एयाणमग्गो दायव्वो, न उण एएहिं' त्ति । इओ य एगो सेयंवर(सिंधवओ) पुराणो संजाय-संवेगो चिंतिउमाढत्तो त्ति ।

मए वि अप्प दंतो संजमेण तवेण य ।
मा हं परेहिं दंमंतो बंधेणेहि वहेहि य ।।

अप्पा चेव दमेयव्वो अप्पा हु खलु दुद्दमो ।
अप्पा दंतो सुहि होहि अस्सिं लोगे परत्थ य ।।

ता तहा दमामि अप्पाणं जहा सुहि होहि । गओ सज्झगिरिंमि । गहिया वाहियाण मज्झे सामन्नया । गुरुयर-वाहि त्ति काउं जाओ तेसिं सो च्चिय मयहारो । अन्नया सेलमारुहंतेण आगच्छंतं साहुं दट्ठूण दिन्नो सिद्धएण से मग्गो । अव्वो ! भग्गो रायविदिण्णो अम्हाणं वरो इमिणा समणगस्स मग्गं देंतेण । गया रायकुले भारवाहिणो । वाहरिओ सिद्धएण जाओ ववहारो । सिद्धएण भणियं - 'महाराय ! समारोविय-गरुय-भर' त्ति काऊण अम्हाण तए वरो दिन्नो, ता जइ मए वि भारो घेत्तूण मुक्को, सक्केवेण सो जइ

तेण समणगेण उक्खित्तो; ता किं न दायव्वो से मग्गो ? । राइणा भणियं 'सुट्ठु दायव्वो ।' तेहिं भणियं - 'देव ! ण तेण तण-मेत्तो वि भारो समुक्खित्तो ।' ततो चारित्तधम्म-देसणा-पुव्वयं परूविओ अट्ठारस-सीलंग-साहस्सिओ भारो त्ति ।

वोज्झंति नाम भारा ते च्चिय वोज्झंति वीसमंति (ते)हिं ।
सीलभरओ वोढव्वो जावज्जीवं अविस्सामो ।।

मुणि-वूढो सील-भरो विसय-पसत्ता तरंति णो वोढुं ।
किं करिणो कल्लाणं उव्वोढुं रासहो तरइ ?।।

तओ संजायसंवेगा के वि तेण च्चिय सह निक्खंता, अन्ने सावया संवोत्ता सह नरेंदेणं त्ति ।

अओ भन्नइ विसय- 'उप्पन्न-रागेण वि अप्पा दमियव्वा' त्ति ।

सुयदेवि-पसाएणं सुयाणुसारेण साहियं चरियं ।
कहियं जो सुण नरो सो गच्छइ सासयं ठाणं ।।

## आत्मदमने सिद्धककथा ।

सह्यगिर्यां कोङ्कणनगरे समारोपितगुरुभारम् आरोहयतः अवतारयतः च तान् जनान् दृष्ट्वा राजा तेभ्यः अग्रे गमनाय अवकाशं दत्तवान्। 'अहमपि एतेभ्यः मार्गं ददामि न पुनः ते मह्यं यच्छन्तु' इति । अत्र कश्चित् श्वेताम्बरः सिद्धकनामा वृद्धः सञ्जातसंवेगः चिन्तयितुम् आरब्धवान् ।

मम आत्मा मयैव हि दान्तः च तपसा खलु।
यतेनाहं परैः बद्धो न वा वध्यो कदाचन।।

आत्मा चैव दमनीयः आत्मा हि खलु दुर्लभः।
आत्मदान्तः सुखी सद्यः इहैव च परत्र च।।

तस्मात् आत्मनि दान्ते सुखी भवामि। सह्यगिरिं गतः वाहिकेषु श्रामण्यं स्वीकृतम्। अतिभारवहनसामर्थ्यात् तेषां प्रमुखो सञ्जातः। एकदा शैलम् आरोहता आगच्छन्तं साधुं दृष्ट्वा सिद्धकेन तस्मै अवसरः दत्तः। अहो अनेन श्रमणेन यः मार्गावसरः दत्तः तेन राजदत्तः अस्माकं मार्गावसरः भग्नः । ते सर्वे भारवाहकाः राजकुलं गताः। सिद्धकेन आहूतः व्यवहारश्च सम्पन्नः । सिद्धकेन उक्तं, 'महाराज, अस्मासु अतीव भारः, तेन भवता मार्गावसरः दत्तः, यदि अहमपि तं भारं गृहीत्वा उज्जहामि, तत्र किमाश्चर्यं तेन श्रमणेन उज्झितः भारः। तर्हि कस्मान्न दातव्यः तस्मै मार्गः' इति। राजा उक्तवान्, 'सुष्ठु कृतम्' इति। तैः भारवाहकैः उक्तं, 'देव न तेन तृणमात्रः भारः समुत्क्षिप्तः' इति। ततः चारित्रधर्मदेशनापूर्वकं प्ररूपितः यतः अष्टादशशीलाङ्गसाहस्रिकभारः इति।

नित्यं वहन्ति ये भारं नूनं तेऽर्हन्ति विश्रमम्।
शीलभारस्तु वोढव्यः यावज्जीवमहर्निशम्।।

मुन्यूढः शीलभारो यैः काम्यासक्ताः तरन्ति ते।
करिणः किं नु पर्यङ्कं वोढुं क्षमेत रासभः।।

तदा सञ्जातसंवेगा: केचन तेनैव सह निष्क्रामन्ति। अन्ये श्रावका: संवर्तन्ते नरेन्द्रेण सह। अत: उक्तं- विषयोत्पन्नरागाद् आत्मा दान्तव्य:।

श्रुतदेवीप्रसादेन श्रुत्युक्तं चरितं महत्।
श्रावं श्रावं नर: सत्यं स्थानं प्राप्नोति शाश्वतम्।।

*********

## १३. भावाणुरूव-फले सम्ब-पालअ-कहा

परितुलिय-सग्ग-नगरीए वारवईए अणेग-णरणाह-पणय-पय-पंकओ जायव-सहस्साणुगम्माणो सीहासणत्थो बद्धाविओ वासुदेवो णिउत्त-पुरिसेहिं - 'देव ! पमोएण वद्धसि, समोसरिओ विमुक्क-भूसणो वि तइलोक्क-भूसणो, पणट्ठ-संसार-धम्मो वि संसाराणुगओ अट्ठारस-महरिसी-सहस्स-परिवारो भगवं अरिट्ठणेमी रेवयउज्जाणे । तओ तक्काल-पयट्ट-पहरिस-विसेसेण दाऊण तेसिं जह-चेंतिय-भहियं दाणं पभाए सव्वरिद्धीए वंदिस्सामो ।' आणवेऊण लोगं पुणो वि भणियं कण्हेण - 'जो पढमं सुए तित्थयरं वंदइ, तस्स जहिच्छियं वरं देमि ।' निद्दा-खयं(मि) विबुद्धेण य नियय-धवल-हरे च्चिय गंतूण कय(इ) वय-पयाणि धरणियल-णमिय-जाणु-करयलेण पवट्ट(ड्ढ)माण-संवेगाइसएण पणमिओ संबे तित्थयरो । संकिलिट्ठ-परिणामेण य पालएण गंतूण राइए वंदिओ रज्ज-लोभेण । वासुदेवो वि महाविच्छड्डेण पयट्टो भगवओ

वंदणवडियाए । पत्तो समोसरणं । भावसारं पणमिओ तित्थयरो सहगणहराइहि त्ति । अवि य

तं किं पि अणन्नसमं सोक्खं तस्सासि णेमि–णमणंमि ।
जं कहिऊण न तीरइ संकासं निरुवम–सुहेण ।।

निसामिऊण य धम्मं जहा–अवसरं भणियं कण्हेण – 'केण अज्ज तुम्हे पढमं वंदिया ?'। भगवया भणियं – 'दव्वओ पालएण भावओ संबेण ।' 'कह मे(हिं से)यं ?' भगवया भणियं – 'एसा अभव्विओ य पालओ, इयरो भवसिद्धिओ । तओ दिण्णो संबस्स वरो ।' ततः स्तुतिद्वारेण उक्तं कृष्णेन –

त्वद्वाक्यतोऽपि केषांचिद् बोध इति मेऽद्भुतम् ।
भानोर्मरीचयः कस्य नाम नालोकहेतवः ?।।

न चा(वाऽ)द्भुतमूलं कस्य प्रकृत्याऽऽश्लि(क्लि)ष्टचेतसः ।
स्वस्ये(च्छा) अपि तमस्ते(त्वे)न भासन्ते भास्वतः कराः ।।

अतो भन्नइ – 'एक्काए वि जंतु–किरियाए भावाणुरूवं फलं' ति।

सुयदेवि–पसाएणं सुयाणुसारेण साहियं चरियं ।
कहियं जो सुण नरो सो गच्छइ सासयं ठाणं ।।

## भावानुरूपफले साम्बपालककथा।

स्वर्गतुल्यायां द्वारकानगर्यां नैकैः राजभिः प्रणतपदपङ्कजः, यादवसहस्रेण अनुगम्यमानः, सिंहासनस्थः अभिनन्दितः वासुदेवः राजपुरुषैः, 'देव, दिष्ट्या वर्धसे'। आभूषणमुक्तोऽपि

त्रैलोक्यभूषणः, प्रनष्टसंसारधर्मोऽपि संसारधर्मानुगतः अष्टादशसहस्रमहर्षिपरिवारः भगवान् अरिष्टनेमिः समोशरणाय निष्क्रान्तः रैवतोद्याने।' तदा तत्कालजातप्रहर्षविशेषेण यथाचिन्तितं अभ्यधिकं दानं तेभ्यः दत्त्वा, 'प्रभाते सर्वसमृद्धया वन्दिष्यामहे' इति लोकानाज्ञाप्य पुनः कृष्णः उवाच। 'यः दिने प्रथमं तीर्थङ्करं वन्देत तस्मै यथेष्टं वरं दास्यामि'। निद्रावसाने प्रबुद्धेन साम्बेन स्वधवलगृहे एव कतिपयपदानि गत्वा जानुकरैः धरणीं स्पृष्ट्वा प्रवर्धमानसंवेगातिशयेन तीर्थङ्करः वंदितः। पालकेन संक्लिष्टपरिणामेन राज्यलोभेन रात्रौ एव तीर्थङ्करः वंदितः। वासुदेवोऽपि महाविभवेन भगवन्तं वन्दितुं प्रवृत्तः। प्राप्तः समोशरणम् । सः गणधरयुक्तं तीर्थङ्करं भावपूर्णं नमनम् अकरोत्।

नेमिनः वन्दने सत्यं सुखं नान्यसमं हि तत्।
निरुपमसुखं यावत् न किञ्चिदुपलभ्यते।।

धर्मं निशम्य कृष्णेन यथावसरं पृष्टम्, कः अद्य भवन्तं प्रथमं वन्दितवान्' इति । भगवान् उक्तवान्, 'प्रत्यक्षं पालकेन भावतः साम्बेन' इति। 'क एतयोः श्रेष्ठः' इति। भगवता कथितम्, 'अभव्यः पालकः इतरः भव्यः' इति। तदा साम्बाय वरं दत्तवान्। ततः स्तुतिद्वारेण उक्तं कृष्णेन –

तद्वाक्यतोऽपि केषाञ्चिद् बोध इत्युद्धुतं मम।
भानोर्मरीचयः कस्य नाम नालोकहेतवः।।

नाद्भुतमूलं वा कस्य प्रकृत्याऽऽश्लिष्टचेतसः।
स्वच्छाश्च तमसा व्यूढाः भासन्ते भास्वतः कराः।।

अतो उक्तम् - 'एका जन्तुक्रियाऽपि भावानुरूपं फलति'।

भावसमं खलु फलं क्रियासाम्येऽपि दृश्यते।
साम्बपालकसन्दर्भे नेमिना कथितं ननु॥

***********

## १४. छल-दव्वे वंचअ-वणिग कहा

वसंतपुरे जियारी राया । अच्चंत-निंदाणुग्गओ हरिनंदी वणियओ । नायणी से भारिया । लच्छी तेसिं धूया, दिन्ना य कुसुमपुर-निवासिणो वणियसुयस्स । अण्णया विवणीए । चिट्ठंतस्स हरिनंदिणो आगया आहीरी । कप्पास-निमित्तं च समप्पिया दोन्नि रूवगा । दिण्णासु दोसु तुलासु मुद्धत्तणओ बद्धो पोट्टलओ । हरिनंदिणा चिंतियं - 'सुंदरं जायं, जं जमिक्करुवय-कप्पासेणं तुट्ठा। अपुव्व-लाभो य एस रुवओ, ता घयपुण्णे काराविऊण भुंजामो ।' ततो पट्ठवियाणि खीर-घयाईणि । णिप्फण्णेसु य घयपुन्नेसु कय(इ)वय- पुरिस-सहिओ पत्तो जामाओ । आमंतिओ सासुए भोयणनिमित्तं । तेण भणियं 'तुरिएण गंतव्वं, ता जं पुव्वदंडरद्धमत्थि, तं चिय भोत्तूण गच्छामो ।' तओ भोत्तूण सव्वे घयपुन्ने सेसं च भोयणं गओ सो । हरिनंदीवि आगओ । अच्चंत खुहाए परद्धो घय-पुण्णाहिलासी अणेग-डिंभाणुगओ पत्तो गेहं । णिसण्णा आसणे समुवणीयं भोयणं । परिविट्ठो कोद्दवो घणो सह वल्लतेल्लेहिं । घयपुण्णे भुंजिस्सामो त्ति दिण्णो डिंभाण। भुत्ते य तंमि घयपुण्णे आगच्छंते पलोयंतस्स समुट्ठिया भारिया नीरं घेत्तूण । भणियं च णाए - आयमसु । अव्वो ! थेव-वेलाए घयपुण्णे दाहि त्ति । धमधमंतो

उट्ठिऊण तत्तो निविट्ठो अन्नत्थ । तओ भणियं नाइणीए – 'विवणीए वच्चसु ।' तेण भणियं – 'किं वे(वि)याले घयपुण्णे दाहिसि?' ताए भणियं – 'जामाउ ससहाओ भोत्तूण गओ ।' चिंतियं च णेण – पावो हं, निवडियं च संपयमेव पावस्स कुसुमं सेसं (ममेयं), जेण सामण्णाहारो वि न संपडिओ । गओ बाहिं, चिंताउरो य ट्ठिओ नग्गोहहेट्ठंमि । थेववेलाए य दिट्ठो साहू । तेण समीवेण वोलंतो य वणिएण भणिओ – 'एहि भयवं ! वीसमसु ताव ।' साहुणा भणियं – 'तुरियं मए नियय-कज्जेण गंतव्वं ।' वणिएण भणियं – 'किं भयवं ! को वि परकज्जेणावि गच्छइ ।' साहुणा भणियं – 'भद्द ! जहा तुमं चिय कज्जेण किलिस्ससि, अण्णे य अविरया ।' संजाय-संकेण चिंतियं वणिएण – 'हंत! कहमेणेणाह वियाणिओ?' तओ गंतूण सुहासणत्थं साहुं विण्णविउमाढत्तो । 'भगवं ! कहं तए नायं ? जहा मए आभीरी रुवयं मुसिया । न(ए)यमण्णेसिं कहेयव्वं ।' विम्हिअचित्ते पुच्छिओ मुणिणा – 'भद्द ! किमेवं जंपसि ? सिट्ठे य सब्भावे भणियं साहुणा ।'

बहुसुणेइ कण्णेहिं, बहुअच्छीहिं पेच्छइ ।
न य दिट्ठं सुयं सव्वं भिक्खू अक्खाउमरहइ ।।

अण्णं च भद्द – 'किमेवं जंपसि? सव्वो वि अविरय-जणो महिला य पुत्ताइ-निमित्तं किलिस्सइ, नवरं पावकम्मं अप्पणो गेण्हइ।' पुणो य संसत्त-मूले परूविए साहुधम्मे भणियं वणिएण – 'भयवं ! धण्णो हं, जेण मए सिद्धिपुरिसत्थवाहो तुमं पाविओ । ता जाव सयणमापुच्छिामि ताव ते पाय-मूले सफलीकरेमि मणुयत्तं पव्वज्जा-विहाणेण ।' मुणिणा भणियं – 'देवाणुप्पिया! एयं कुणसु,

कायव्वमिणं भव्व-सत्ताणं ।' गओ एसो । भणिओ परियणो - 'मए देसंतर(रं) वणिज्ज-वडियाए गंतव्वं ।' दोण्णि य सत्थवाहा एगो मूल-भंडं दाऊण सुहेण इट्ठपुरं पावेइ । तत्थ य विढत्तं न किंचि गेण्हइ । दुइओ पुण न किंचि मूल-भंडं देइ, पुव्व-विढत्तं च लुंपइ । इट्ठपुर-दव्व-लाभा पुण दूर-च्चाइया । ता साहह, 'कयरेण सह वच्चामो ?' सयणेण भणियं - 'पढमेण सह वच्चसु ।' जस एवं, ता अणुव्वयह ममं । गओ सयण पत्तो तमुद्देसं । कत्थ ते सत्थवाहा ? वाणिएण भणियं - 'पढमो सत्थवाहो एस महप्पा मुणी, मूल-भंडं पंचमहव्वय-रयणाणि दाऊण सिवपुरे नगरे णेइ, ण य निव्वाणसुहं ममाहिंतो गेण्हइ । विइअ सत्थवाहा उ तुब्भे, दाऊण धम्म-मोल्लं पुव्वाज्जियं घेत्तूण संसारे छुहइ(ह) ।' तओ पडिबुद्धेण सयणेण भणिओ 'एसो धण्णो तुमं, पुज्जंतु ते मणोरहा, करेसु समीहियं ।' तओ पवड्ढमाण-संवागाइसओ पव्वइओ वणिओ पालिऊण सामण्णं गओ निव्वाणं त्ति ।

## छलद्रव्ये वञ्चकवणिक्कथा।

वसन्तपुरे जितारिः नाम राजा आसीत्। अत्यन्तनिन्दनीयः हरिनन्दी वणिक् च। नागनी नाम्नी तस्य भार्या । लक्ष्मीं नाम तयोः कन्यां कुसुमपुरे निवासिने वणिक्पुत्राय दत्तवान् सः। एकदा विपणे स्थितस्य तस्य वणिजः समीपे आभीरदेशस्था काचित् स्त्री समागता। कार्पासाय रुप्यकद्वयं दत्तवती। मुग्धत्वात् द्वयोः तुलपुटयोः सा कार्पासपुञ्जौ स्थापितवती। हरिनन्दी चिन्तितवान्, 'शोभनं जातं यत् एकमात्ररूप्यकस्य कार्पासेन सन्तुष्टा सा। अपूर्वोऽयं लाभः एकस्य रूप्यकस्य। तर्हि अनेन रूप्यकेण घृतपूर्णान् मण्डकान् कारयित्वा

भक्षयामि।' ततः तेन दुग्धं घृतं च गृहं प्रति प्रेषितम्। अथ सिद्धेषु मण्डकेषु तस्य जामाता अनेकैः मित्रैः सह तत्र सम्प्राप्तः। निमन्त्रितः सः भोजनाय श्वश्र्वा। तेनोक्तं यत् त्वरया गन्तव्यम् अतः सिद्धान्नमेव भुक्त्वा गच्छामि। तदा तान् सर्वान् मण्डकान् भक्षयित्वा अवशिष्टं च भोजनं गृहीत्वा सोऽगच्छत्। हरिनन्दी अपि क्षुत्क्षामकण्ठः अनेकैः बालकैः परिवेष्टितः घृतपूर्णमण्डकाभिलाषी गृहमागतः। निषण्णः आसने भोजनं च प्राप्तवान् । द्विदलधान्यतैलसहितान् कोद्रवान् परिविष्टवती तस्य भार्या । घृतपूर्णमण्डकान् खादिष्यामि इतिकृत्वा बालकेभ्यः दत्तवान् तान् कोद्रवान्। परिसमाप्तान् मण्डकान् दृष्ट्वा तं च आगच्छन्तं दृष्ट्वा सा जलं गृहीत्वा उत्थितवती। उक्तं च तया, 'आचमनं कुरु' इति।

'अम्मो, कालान्तरेण घृतपूर्णान् मण्डकान् दास्यति' इति विचार्य धमधमायमानः सः अन्यत्र उपविष्टः। तदा नागनी उक्तवती, 'आपणं गच्छ' इति। तेन उक्तं, 'किम् अकाले घृतपूर्णान् मण्डकान् दास्यसि' इति। तया कथितं, 'ससहायः जामाता भुक्त्वा निर्गतः। अनेन चिन्तितं 'पापोऽहं अतः एतत्पापकुसुमं ममोपरि पतितं येन सामान्याहारम् अपि न प्राप्तवान्' इति। बहिर्गत्वा चिन्ताक्रान्तो भूत्वा न्यग्रोधवृक्षस्य अधः उपविष्टः। कश्चित् कालानन्तरं सः साधुमेकम् अपश्यत्। तस्य समीपतः व्यतिक्रामन्तं तं साधुं स अवदत् यद् एहि भगवन्, विश्रम्य तावत्। साधुना उक्तं यत् मत्कार्यार्थं त्वरया गन्तव्यम्। वणिग् उक्तवान्, 'अपि परार्थं कोऽपि त्वरया गच्छेत्?' इति। साधुः अवदत् यत् त्वं परनिमित्तेन क्लिश्यसे तथैव अन्येऽपि अविरतं क्लिश्नन्ति। सञ्जातशङ्कः वणिगचिन्तयत्, 'कथमनेन अहं विज्ञातः' इति। तदा सुखासने उपविशन्तं तं साधुं

सः विज्ञापितवान्, 'अहं ताम् आभीरीं वञ्चितवान् इति भवता कथं ज्ञातम्। नैतदन्येभ्यः कथनीयम्' इति। विस्मितचित्तेन मुनिना पृष्टं, 'भद्र, किमेवं जल्पसि?' इति। सद्भावमुपदिशन् साधुरवदत् –

बहुशः श्रूयते कर्णैः रूपाणि नयनैस्तथा।
अदृष्टश्रुतपूर्वं च वक्तव्यं भिक्षुणा किल।।

'अन्यच्च, भद्र, किमेवं वदसि। भार्यापुत्रार्थमेव सर्वे अविरतं जनाः क्लिश्नन्ति। स्वपापकर्म एव स्वीकुर्वन्ति'। पुनः संसक्तमूले प्रारोपिते साधुधर्मे स वणिग् उवाच, 'भगवन्, धन्योऽहं, येन सिद्धिपुर्याः सङ्घनायकः भवान् प्राप्तः तर्हि स्वजनमनुज्ञाप्य ते पादमूले सफलीकरोमि मनुष्यत्वं प्रवज्याविधानेन। मुनिरवदत्, 'देवानुप्रिय एवं विधेहि, देवानां प्रिय, भव्यसत्त्वैः इदमेव कर्तव्यम्' इति। सः गत्वा स्वजनम् अभणत् यत् वणिक्त्वात् मया देशान्तरं गन्तव्यम्। द्वौ सार्थवाहौ तयोरेकः मूलधनं दत्त्वा सुखेन इष्टपुरं प्राप्तः परन्तु तत्र यदर्जितं तत् सः न स्वीकृतवान्। अपरश्च मूलधनं अदत्त्वा पूर्वार्जितं विनाशयति। इष्टपुरद्रव्यलाभं दूरादेव त्यजति। तर्हि कथय, 'केन सह गन्तव्यम्' इति। स्वजनः उक्तवान्, 'प्रथमेन सह गच्छ' इति। एवं सति मामनुसर। स्वजनेन अनुसृतः सः। प्राप्तः स तं प्रदेशम्। 'कुत्र तौ सार्थवाहौ' इति स्वजनेन पृष्टम्। वणिग् उक्तवान्, 'प्रथमः सार्थवाहः एष महात्मा मुनिः' इति। मूलभाण्डं पञ्चमहाव्रतरत्नानि दत्त्वा सः शिवपुरीं नयति। न च मत्तः निर्वाणसुखं स्वीकरोति। भवान् द्वितीयः सार्थवाहः। धर्ममूल्यं दत्त्वा पूर्वार्जितं स्वीकृत्य संसारे निमज्जति। सदा प्रतिबुद्धेन स्वजनेन अयमुक्तः, 'धन्योऽसि, पूर्यन्तां ते मनोरथाः, यथेच्छं कुरु' इति। तदा

संवेगातिशयप्रवृद्धः वणिक् प्रव्रजितः श्रामण्यं परिपाल्य च निर्वाणं गतः ।

**********

# १५. दाणंमि वुड्ढदंपईणं कहा

दायव्वं नियहत्थेण, परोदाहिइ वा न वा ।
वुड्ढदंपई दिट्ठंतो विक्खाओ एत्थ वुच्चइ ।।१।।

एगम्मि नयरे निद्धणो थेरो वणिओ अपुत्तो अत्थि । नियडिकुसला तस्स थेरी भज्जा दुट्ठा विज्जइ । तेण वणिएण निद्धणेण कयावि दाणं न दिण्णं । एगया तेण चिंतियं – 'दाणेण विणा परलोगे सुहं न होहि । तेण किंचि वि इहभवे दाणं दायव्वं' ति वियारिऊण मज्झघरे एगो जच्चतुरंगमो अत्थि, तस्स विक्कएण जं दव्वं होहिइ तं धम्मत्थं मए अप्पियव्वं, एवं चिंतमाणस्स तस्स कियंतो कालो गओ। जया तस्स मरणसमओ आगओ, तया महायणं बोल्लाविऊण कहेइ – 'मम मरणस्स पच्छा मम भज्जा एयं जच्चतुरंगमं विक्केऊणं जं दव्वं पाविस्सइ, तं दव्वं परलोगसुहाय तुम्हाणं दास्सइ । तं दव्वं तुम्हेहिं सुहकम्मंमि निओइयव्वं' त्ति कहिऊण सो मरणं पत्तो ।

तस्स वुड्ढा भज्जा नियभत्तुणो मरणकिच्चं किच्चा वियारेइ – 'इमस्स जच्चतुरंगमस्स विक्कएणं रुवगसयं होही, तं तु महायणस्स अप्पणीयं भविस्सइ । मम पासे किं न ठास्सइ, तओ एवं कायव्वं जेण सव्वधणं मईयपासे च्चियं ठाएज्ज ।' एवं चिंतिऊण एगो मंजारो

पालिओ । विक्कयकाले मंजारस्स रुवगाणं नवनवइ ठविया । तुरंगस्स एगो रुवगो ठविओ। जो को वि कयणत्थं आगच्छेज्जा तस्स सा एवं कहेइ – 'मए एसो तुरंगो मंजारेण सह च्चिय विक्केयव्वो । एक्कमेको कस्स वि न दायव्वं, जस्स गहणेच्छा सिया, तेण मंजारस्स रूवगाणं नवनवई दायव्वा, तुरंगमस्स एगो च्चिय रूवगो । एगमेगं तु न विक्केस्सामि ।' लोगा तुरंगमस्स गहणेच्छाए आगच्छंति । सा पुव्वं मंजारगहणाय कहेस, पच्छा तुरंगं । मंजारं को वि न गिण्हेइ।

एगया एगो वणिओ आगओ । तीए तारिसं वयणं सोच्चा तेण मंजारस्स रूवगाणं नवनवई दिण्णा, आसस्स रुवगो एगो दिण्णो। सा रूवगसयं गिण्हित्ता घरे आगया । महायणं बोल्लाविऊण जया एगं रूवगं देइ, तया पुच्छइ 'किमेवं ?' सा कहेइ – 'तुरंगमस्स विक्कएण एगो रूवगो लद्धो । रूवगाणं नवनवई मंजारविक्कएण लद्धा । मम भत्तुणा वि एवं कहियं – 'तुरंगमस्स विक्कएण जं दव्वं होज्जा तं अप्पियव्वं', मए उ तं दव्वं तुम्हाणं दिण्णं ।' एवं वुड्ढाए महायणो वि वंचिओ । सा य अइलुद्धत्तणेण तस्स उवभोगं अकिच्चा चिय, विविहकिलेसं सहमाणा, मरणकाले वि दव्वं चेव झायमाणा अट्टरोद्दज्झाणपरा मच्चुं पत्ता । तओ निएण हत्थेण जं दाणं दिज्जइ तमेव परलोए सुहकरं होइ ।

उवएसो –

दिट्ठंतं थेर-थेरीए सोच्चा सब्भावओ सया ।
जहुत्तं जं तह दिज्जा मायं नाव समायरे ।।२।।

# दाने वृद्धदम्पतीकथा।

स्वहस्तेनैव दातव्यं परो दद्यात् न वेति वा।
वृद्धदम्पतीदृष्टान्तः विश्रुतोऽत्र समुच्यते।।

कस्मिंश्चिन्नगरे कोऽपि निपुत्रिकः स्थविरः निर्धनश्च वणिग् आसीत्। धूर्तोत्तमा तस्य वृद्धा भार्या दुश्चित्ता आसीत्। निर्धनत्वात् न तेन कदापि किमपि दत्तम्। एकदा तेन चिन्तितं यद् दानेन विना परलोके सुखं नास्ति, तस्माद् अस्मिन् जन्मनि किमपि दातव्यम् इति। एवं चिन्तयन् सः अमन्यत यत् मम गेहे एकः कुलीनः अश्वः वर्तते। तस्य विक्रयेण यद् धनं प्राप्स्यामि तद् धर्माय दातव्यम्। अस्मिन् चिन्तने सः कश्चित्कालम् अयापयत्। मृत्युसमये महाजनान् आहूय सोऽवदत्, 'मम मृत्योरनन्तरं मम पत्नी इमं कुलीनम् अश्वं विक्रीय यद् धनं प्राप्नुयात् तद् धर्माय भवद्भ्यः दास्यति। तद् द्रव्यं भवत्सुखार्थं नियोक्तव्यम्' इत्युक्त्वा स पञ्चत्वं गतः।

तस्य वृद्धा भार्या स्वपत्युः अन्तिमं संस्कारं विधाय अचिन्तयत्, 'इमम् जात्यम् अश्वं विक्रीय शतरूप्यकाणि प्राप्नुयां परं तानि तु महाजनेभ्यः दातव्यानि । मत्सविधे किमपि न अवशिष्येत् । तस्मात् तथा कर्तव्यं येन सर्वं धनं मत्समीपम् एव भवेद्' इति विचिन्त्य सा एकं बिडालम् अपालयत्। विक्रयकाले मार्जारस्य नवनवतिरूप्यकं मूल्यं निश्चितम् अश्वस्य च एकरूप्यकम्। उभयमपि एकेनैव क्रेतव्यम्। यः कोऽपि क्रयार्थमागच्छति तस्मै सा एवं कथयति स्म। अहम् इमम् अश्वं मार्जारेण सहैव विक्रेतुम् इच्छामि। एकैकं कस्मै अपि न दास्यामि। इच्छुकः मार्जारस्य

नवनवतिरूप्यकाणि अश्वस्य च एकं रूप्यकं दद्यात्। एकैकं न विक्रीणे। जनाः अश्वक्रयणार्थम् आगच्छन्ति स्म। सा च तेभ्यः 'आदौ मार्जारं पश्चाद् अश्वम्' इति कथयति स्म। कोऽपि नेच्छति मार्जारम्।

एकदा कश्चिद् धनिकः आगतः। तस्याः तद् वचनं श्रुत्वा तेन मार्जारार्थं नवनवतिरूप्यकाणि अश्वस्य च रूप्यकमेकं दत्तम्। सा रूप्यकाणि गृहीत्वा गृहमागता। महाजनान् आहूय यदा सा रूप्यकमेकं दत्तवती तदा तैः पृष्टं 'किमेतद्' इति। सा उक्तवती यत् तुरङ्गमस्य विक्रयेण रूप्यकमेकं प्राप्तं, नवनवतिरूप्यकाणि तु मार्जारस्य कृते। मम भर्तापि एवमेव उक्तवान् यत् तुरङ्गमविक्रयेण प्राप्तं मूल्यं भवद्भ्यः दातव्यम्। मया तदेव दत्तम्। एवं तया ते महाजना अपि वञ्चिताः। अतिलोभेन साऽपि द्रव्यम् अभुक्त्वा नैकान् क्लेशान् सोढ्वा मृत्युसमयेऽपि धनं चिन्तयन्ती अष्टरौद्रध्यानयुक्तं मरणं प्राप्तवती। अत उच्यते – 'स्वहस्तेन दत्तं दानं परलोकसुखाय भवति' इति।

उपदेशः –

दृष्ट्वा स्थविरदृष्टान्तं सद्भावं परिवर्धयेत्।<br>
वचनानुगुणं देयं वञ्चना माऽस्तु कुत्रचित्।।

**********

# १६. दाणविलंबोवरिं जुहिट्ठिलभीमसेणाणं कहा

दाणधम्मस्स वेलाए, विलंबं न समायरे ।
कल्ले दाणं पयच्छिस्सं, जुहिट्ठिलवयं जहा ।।१।।

जुहिट्ठिलमहानरिंदो मज्झण्हं जाव पइदिणं दाणं देइ । एगया को वि निद्धणो माहणो बहुदूराओ आगच्च जुहिट्ठिलदाणसालाए समत्तपाए मज्झण्हसमए पविट्ठो । पंचेव पंडवा दाणसालाए विज्जंति। तया धम्मपुत्तेण बंभणस्स उत्तं – 'कल्ले दाहिमि ।' एवं सोच्चा निरासो बंभणो गओ । तया भीमसेणेण चिंतिअं – 'विलंबो न जुत्तो दाणे । तम्हा महाराय बोहिमि', इअ चिंतिऊण सिग्घं तओ उट्ठाय आउहसालाए गओ । तत्थ एगा विजयढक्का अत्थि । जया को वि देसो जिणिज्जइ, तया सा वाइज्जइ । वाइज्जमाणाए ढक्काए पउरेहिं जाणिज्जइ, अज्ज को वि देसो पंडवेहिं जिओ त्ति । भीमसेणो वि सयं तं ढक्कं महादंडेण वाइउं लग्गो । तया तीए ढक्काए महागज्जणारवो पउरेहिं सुओ । जुहिट्ठिलेणावि सुणिओ । सो चिंतेइ – 'अज्ज ढक्कं को किमत्थं वाएइ?' त्ति । पासत्थिअं नरं पुच्छइ । सो नरो निरिक्खिऊण आगओ समाणो नरिंदं कहेइ – 'हे महाराय ! अज्ज भीमसेणभाया विजयढक्कं वाएइ ।'

धम्मपुत्तो भीमसेणं बोल्लाविऊण पुच्छइ – 'हे भायर ! अज्ज को अउव्वो देसो केण विजिओ ? जेण सयं तु विजयढक्कं वाएसि ।' भीमसेणेण उत्तं – 'हे महाराय ! तित्थंकरेहिं केवलीहिं जोगीहिं महारिसेहिं च जो कया वि न जिओ, सो अज्ज जिओ, तेण इमा विजयढक्का मए वाइज्जइ ।' धम्मपुत्तेण पुट्ठं – 'किं तए

जिअं?' भीमसेणो कहेइ – 'निव्वलस्सं मम अज्जेअं तं जेउं सत्ती नत्थि ।' पुणरवि पुट्ठं – 'तो केण जिओ ?' भीमसेणो कहेइ – 'हे महाराय, तुमए सो विजिओ ।' जुहिट्ठिलो पुच्छइ – 'कया मए जिओ ?' भीमसेणो कहेइ – 'अज्ज अहुणा य । जया सो माहणो एत्थ आगओ, तया भवंतेण उत्तो – 'कल्ले दाइस्सं' त्ति । तओ नज्जइ एगदिणं जाव भवंतेण कालस्स विजओ कओ । पुव्वं केण वि महापुरिसेण कालो न जिओ । तए पुणो सो जिओ । तेण अच्छेरजुत्तेण मया ढक्का वाइया ।'

नीइसत्थे वि कहियं – 'जं कल्ले कायव्वं तं अज्ज करणीज्जं। जं अज्ज संझाए कायव्वं तं मज्झण्हे करणीयं । जं मज्झणिज्जं करणीज्जं, तं अहुण च्चिय कायव्वं, जओ मच्चू नहि पइक्खइ, अणेण णियकज्जं कयं अहवा न कयं ति, तओ सुहाणं कज्जाणं करणे विलंबो न कायव्वो ।' तं सुणिऊण धम्मपुत्तो महारायो नियं पमायं जाणित्ता, तं बंभणं बोल्लाविऊण बहुधणं दाहीय। एवं दाणेविलंबो ण कायव्वो । उवएसो –

वयणं भीमसेणस्स, दाणे जुत्तिसमन्नियं ।
सुणित्ता भविया तंमि पमायं परिवज्जह ।।२।।

## युधिष्ठिरभीमसेनकथा।

दानधर्मस्य वेलायां विलम्बं न समाचरेत्।
'दानं श्वो हि प्रदास्यामि' धर्मस्य वचनम् इव।।

युधिष्ठिरमहाराजः आ मध्याह्नं प्रतिदिनं दानं यच्छति स्म। एकदा कोऽपि निर्धनः दूरात् मध्याह्नसमयानन्तरं युधिष्ठिरदानशालां समागच्छत्। पञ्च अपि पाण्डवाः दानशालायामेव आसन्। तदा धर्मराजः ब्राह्मणाय कथितवान् 'श्वो दास्यामि' इति। एवं श्रुत्वा निराशः ब्राह्मणः। तदा भीमसेनः अचिन्तयत्, 'दाने विलम्बो न युक्तः अतः महाराजम् उपदिशामि' इति विचिन्त्य सत्वरं सः आयुधशालां गतः। तत्र एका विजयढक्का आसीत्। यदा कोऽपि विजयी भवति स्म तदा सा वाद्यते स्म। वाद्यमानायां ढक्कायां जनाः जानन्ति स्म यद् अद्य कोऽपि प्रदेशः पाण्डवैर्जितः। भीमसेनः स्वयं तां ढक्कां स्वस्य सबलबाहुभ्याम् अताडयत्। तदा तस्याः ढक्कायाः महारवः पौरैः श्रुतः। युधिष्ठिरोऽपि अशृणोत्। सोऽचिन्तयत् यत् केन कस्माद् अद्य ढक्का वाद्यते। पार्श्वस्थं नरम् अपृच्छत्। सः गत्वा दृष्ट्वा प्रत्यागत्य च राजानम् उवाच, 'अयि महाराज, अद्य भीमसेनभ्राता विजयढक्कां वादयति'।

धर्मराजः भीमसेनम् आहूय अपृच्छत्, 'हे भ्रातर्, अद्य कोऽपूर्वो देशः केन जितः, येन त्वं स्वयं विजयढक्कां वादयसि' इति। भीमसेन उक्तवान्, 'हे महाराज, तीर्थंङ्करकेवलिमहर्षियोगिभिर्यः अविजितः सो अद्य जितः, अतः ढक्कावादनम्' इति। धर्मराजः पृष्टवान्, 'कः त्वया विजितः' इति। भीमसेनः अवदत्, 'असमर्थोऽहं तं जेतुम्' इति। पुनरपि पृष्टं धर्मराजेन,'तर्हि केन जितः' इति। भीमसेनः अभणत्, 'महाराज, भवता एव' इति। युधिष्ठिरः अपृच्छत्, 'कदाहं जितवान्' इति। भीमसेनः अवदत् , 'अद्य, अधुना एव । यदा स ब्राह्मणः अत्रागतः तदा भवान् उक्तवान् यत् श्वो दास्यामि' इति, तदा एव विदितं यद्

एकदिनं यावद् भवान् कालं विजितवान्। पुरा केनापि पुरुषेण कदापि कालः न विजितः, स भवता जितः अतः आश्चर्याकुलेन मया ढक्का वादिता।

नीतिशास्त्रेऽपि उक्तं, 'श्वः कार्यम् अद्य कुर्वीत, अद्य सायं करणीयं मध्याह्ने एव कर्तव्यं, यत् मध्याह्ने कर्तव्यं तद् अधुना एव कार्यं यतः मृत्युः न प्रतीक्षते यत् भवता कार्यं कृतं न वेति। तस्मात् शुभकार्ये विलम्बो न युक्तः'। तच्छ्रुत्वा धर्ममहाराजः स्वप्रमादं विज्ञाय तं ब्राह्मणं शीघ्रमाहूय तस्मै बहुधनं दत्तवान्।

अतः दाने विलम्बो न कार्यः।

वचनं भीमसेनस्य दाने युक्तिसमन्वितम्।
तच्च श्रुत्वा भव्यजीवाः प्रमादं परिवर्जयेत्॥

***********

## १७. गेहे सूर-सुवण्णयारस्स कहा

गेहेसुरा जणा गेहे, णियसामत्थदंसगा ।
बाहिरे कायरा तत्थ, सुवण्णार णियंसणं ॥१॥

एगंमि गामे सुवण्णयारो वसइ । तस्स रायपहस्स मज्झभागे हट्टिगा विज्जइ । सया मज्झरत्तीए सो सुवण्णभरियं मंजूसं गहिऊणं णियघरंमि आगच्छइ । एगया तस्स भज्जाए चिंतियं – 'एसो मम भत्ता सव्वया मंजूसं गहिऊण मज्झरत्तीए गेहे आगच्छइ, तं न वरं, जओ कयावि मग्गे चोरा मिलेज्जा तया किं होज्जा ? ।' तओ तीए

णियभत्तारो वुत्तो – 'हे पिय ! मज्झरत्तीए तुज्झ गिहे आगमणं न सोहणं ति मज्झ भाई, कया वि को वि मिलेज्जा तया किं होज्जा?'

सो कहेइ – 'तुं मम बलं न जाणेसि, तेण एवं बोल्लेसि । मम पुरओ नरसयं पि आगच्छेज्ज, ते किं कुणेज्जा? ममग्गओ ते किमवि काउं न समत्था । तुमए भयं न कायव्वं ।' एवं सुणिऊण तीए चिंतियं – 'गेहे सूरो मम पिओ अत्थि, समए तस्स परिक्खं काहिमि ।'

एगया सा नियघरसमीववासिणीए खत्तियाणीए घरे गंतूण कहेइ – 'हे पियसहि ! तुं तव भत्तुणो सव्वं वत्तभूसं मज्झं अप्पेहि, मम किंपि पयोयणं अत्थि ।' तीए खत्तियाणीए अप्पणो पियस्स असिसहियं सिरवेढणकडिपट्टाइसुहडवेसं सव्वं समप्पियं । सा गहिऊण गेहे गया । जया रत्तीए एगो जामो गओ तया सा सव्वं सुहडवेसं परिहाय असिं गहिऊण निस्संचारे रायपहंमि निग्गया । पियस्स हट्टाओ नाइदूरे रुक्खस्स पच्छा अप्पाणं आवरिय ठिया ।

कियंतकाले सो सोण्णारो हट्टं संवरिय, मंजूसं च हत्थे गहिऊण भयभंतो इओ तओ पासंतो सिग्घं गच्छंतो जाव तस्स रुक्खस्स समीवमागच्छइ, ताव पुरिसवेसधारिणी सा सहसा णीसरिऊण मऊणेण तं निब्भच्छेइ – 'हुं हुं सव्वं मुंचेहि, अन्नहा मारइस्सं ।' सो अकम्हा रुंधिओ भएण थरथरंतो – 'मं न मारेसु', इय कहिंतो मंजूसं अप्पेइ । तओ सा सव्वं परिहियवत्थग्गहणाय करवालग्गं तस्स वच्छंमि ठविऊण सन्नाए वसणाइं पि कड्ढावेइ । तया सो परिहियकडिपट्टयमेत्तो जाओ । तओ सा कडिपट्टयं पि

मरणभयं दंसिऊण कड्ढावेइ । सो अहुणा जाओ इव नग्गो जाओ । सा सव्वं गहिऊण घरंमि गया, घरदारं च पिहिऊण अंतो ठिया ।

सो सुवण्णयारो भएण कंपमाणो मग्गे इओ तओ अवलोएंतो आवणविहीए गच्छंतो कमेण जया सागवावारिणो हट्ठसमीवमागओ, तया केणेवि जणेण पक्कचिब्भडं बाहिरं पक्खित्तं, तं तु सुवण्णयारस्स पिट्ठभागे लग्गियं । तेण णायं केणावि अहं पहरिओ । पिट्ठदेसं हत्थेण फासेइ, तत्थ चिब्भडस्स रसं बीयाइं च फासिऊण वियारेइ – 'अहो, हं गाढयरपहरिओ म्हि, तेण घाएण सह सोणियं पि णिग्गयं, तम्मज्झे कीडगावि समुप्पन्ना ।'

एवं अच्चंभयाऊलो तुरियं तुरियं गच्छंतो घरद्दारे समागओ । पिहियं घरद्दारं पासिऊण नियभज्जाए आहवणत्थं उच्चयरेण कहेइ – 'हे, मयणस्स माया ! दारं उग्घाडेहि, दारं उग्घाडेहि ।' सा अब्भंतरत्थिया सुणंती वि असुणंती वि किंचि कालं थिया। अईवक्कोसणे सा आगच्च दारं उग्घाडिय एवं पुच्छइ – 'किं बहुमक्कोससि ?'

सो भयभंतो गिहंमि पविसिय भज्जं कहेहि – 'दारं सिग्घं पिहाहि, तालगं पि देसु ।' तीए सव्वं काऊण पुट्ठं – 'किमेवं न नग्गो जाओ ।' तेण वुत्तं – 'अब्भंतरे अववरगे चल, पच्छा मं पुच्छ।' गिहस्स अंतो अववरए गच्चा निश्चिंतो जाओ ।

तीए पुणो वि पुट्ठं – 'किं एवं नग्गो आगओ ?' तेण कहियं – 'चोरेहिं लुंटिओ, सव्वं अवहरियं नग्गो कहो ।' सा कहेइ – 'पुव्वं मए कहियं, हे सामी ! तए एवं मज्झरत्तीए मंजूसे गहिऊण न

आगंतव्वं, तुमए न मन्नियं तेण, एवं जायं ।' सो कहेइ – 'अहं महाबलिट्ठो वि किं करोमि ? जइ पंच छ वा चोरा आगया होज्जा? तया ते सव्वे अहं जेउं समत्थो । एए उ सयसो थेणा आगया, तेणाहं तेहिं जुज्झमाणो पराजिओ, सव्वं लुंटिऊण नग्गो कओ । पिट्ठदेसे य अणिग्गहं पहरिओ । ममेस पिट्ठदेसं घाएण सह कीडगावि उप्पन्ना ।' तीए तस्स पिट्ठदेसं पासित्ता नायं चिब्भडस्स रसबीयाइं इमाइं लग्गाइं संति । भत्तुस्सवि कहियं – 'सामी ! भयभंतेण तए एवं जाणीयं केण वि अहं पहरिओ, तओ सोणिअं निग्गयं, तत्थ य कीडगा वि समुप्पन्ना, तं न सच्चं । तुं चिब्भडेण पहरिओ सि, तस्स रसो बीयाइं च पिट्ठदेसे लग्गाए' त्ति ।

तओ तस्स देहपक्खालणाय सा जलं गहिऊण आगया णियपइस्स देहसुद्धिं करेऊण परिहाणवत्थप्पणे ताइं चेव वत्थाइं अप्पेइ । सो ताइं वत्थाइं पासिऊण धिट्ठत्तणेण कहेइ – 'हुं हुं मए तय च्चिय तुमं नाया', मए चिंतियं – 'मम भज्जा किं करेइ त्ति हं पासामि । तेणाहं भयभंतो इव तत्थ थिओ, मए य सव्वावहरणमुवेक्खियं, अन्नह मम पुरओ इत्थीए का सत्ती ?' सा कहेइ – 'हे भत्तार ! तव बलं मए तया चेव नायं, गेहे सूरो तुमं आसी । अओ अज्जप्पभिइ तुमए मज्झरत्तीए मंजूसं भहिऊण कयावि न आगंतव्वं' त्ति भज्जाए वयणं सो अंगीकरेइ । उवएसो –

सुवण्णगारदिट्ठंतं नच्चा लोगा जहा बलं ।
वएज्जा वा सकज्जाइं, पसाहेज्जा विवेगिणो ।।२।।

# गेहेशूरसुवर्णकारकथा।

गेहेशूरजनाः सर्वे निजसामर्थ्यदर्शकाः।
बहिस्तु कातरा एते भीरुसुवर्णकारवत्।।

कस्मिंश्चिद् ग्रामे कोऽपि सुवर्णकारः वसति स्म। राजपथस्य मध्ये तस्य आपणः। सदा मध्यरात्रौ सुवर्णमञ्जूषां गृहीत्वा सः गृहम् आगच्छति स्म। एकदा तस्य भार्यया चिन्तितं, 'सदा मम भर्ता मध्यरात्रौ सुवर्णमञ्जूषां गृहीत्वा गृहमागच्छति तन्न वरम्, चौराः प्राप्ताः स्युः तर्हि किं भवेद्' इति। अतः सा निजभर्तारम् उक्तवती, 'मन्ये मध्यरात्रौ तवागमनं न युक्तम्। कदापि कोऽपि पथि निरुन्ध्यात् तर्हि किं भवेद्' इति।

सोऽवदत् 'मम सामर्थ्यं न जानासि अतः एवं भणसि। मम पुरतः नरशतमपि आगतं किं तत् कुर्यात्। मत्पुरतः किमपि कर्तुम् असमर्थाः ते। त्वं मा भैषीः' इति। एवं श्रुत्वा सा चिन्तितवती, 'गृहेशूरः मम भर्ता समये तं परीक्षे' इति।

एकदा सा निजगृहसमीपवासिनीं क्षत्रियाणीं गत्वा अवदत्, 'हे प्रियसखि, तव पत्युः सर्वाणि वस्त्राभूषणानि मह्यं देहि। मम किमपि प्रयोजनं वर्तते' इति। सा क्षत्रियाणी निजभर्तुः असिना सह शिरस्त्राणं कटिपट्टीत्यादिकं सर्वं सुभटवेषं च तस्यै अयच्छत्। तं गृहीत्वा सा गृहमगच्छत्। रात्र्याः प्रहरानन्तरं सा तं सुभटवेषं परिधाय असिं गृहीत्वा निर्जनं राजपथमगच्छत्। प्रियस्य आपणसमीपे वृक्षपार्श्वे वस्त्रावृता स्थिता।

किञ्चित्कालानन्तरं स सुवर्णकारः आपणं पिधाय मञ्जूषां गृहीत्वा भयेन अत्रतत्र पश्यन् शीघ्रं गच्छन् तस्य वृक्षस्य समीपं यावद् आगच्छत् तावद् वृक्षपार्श्वे स्थिता पुरूषवेषधारिणी सा अकस्माद् बहिरागत्य साटोपम् आह, 'हं, सर्वं विसृज, अन्यथा मारयिष्यामि' इति। अकस्माद् अवरुद्धः सः, 'मा जहि मा जहि' इति वदन् मञ्जूषाम् अयच्छत्। तदा सा तस्य वक्षसि करवालाग्रं संस्थाप्य सर्वाणि वस्त्राणि आकृष्टवती। तदा केवलं कटिवस्त्रमवशिष्टम्। मरणभयं दर्शयित्वा सा कटिवस्त्रमपि गृहीतवती। सः नवजातशिशुरिव नग्नः सञ्जातः। सर्वं गृहीत्वा गृहं गता सा द्वारं पिधाय अतिष्ठत्।

सः सुवर्णकारः भयकम्पितः इतस्ततः वीक्षमाणः आपणवीथीतः शाकापणम् आगच्छत्। तदानीं केनापि पक्वोर्वारुकं बहिः प्रक्षिप्तम्। तत् तस्य पृष्ठे अपतत्। स अमन्यत यत् केनापि प्रहारः कृतः इति। पृष्ठं स्पृष्ट्वा ऊर्वारूकस्य रसस्य बीजानां च स्पर्शं संविद्य सः अचिन्तयत् 'अहो, गाढः प्रहारः तेन रक्तमपि आगतं कृमयश्च जाताः' इति।

एवम् अत्यन्तं भयभीतः शीघ्रतया गृहद्वारं समागतः। पिहितं द्वारं दृष्ट्वा स्वपत्नीम् उच्चरवेण उक्तवान्, 'हे मदनमातर्, द्वारमुद्घाटय, द्वारमुद्घाटय' इति। अभ्यन्तरस्थिता सा श्रुत्वाऽपि अश्रुतम् इव कृत्वा तत्रैव अतिष्ठत्। बहुवारं तस्य आक्रोशं श्रुत्वा द्वारम् उद्घाट्य सा पृष्टवती, 'कस्माद् आक्रोशसि' इति।

भयभीतः सः गृहं प्रविश्य भार्याम् अवदत् 'शीघ्रं द्वारं पिधेहि। तालं च स्थापय' इति। तथाकृत्वा सा पृष्टवती, 'कस्माद्

भवान् एवं नग्नः' इति। सः अभणत् यत् प्रथममाभ्यन्तरे प्रविश अनन्तरं कामं पृच्छ। गृहान्तरं गत्वा सः आश्वस्तः अभवत्।

सा पुनः पृष्टवती यत् कस्माद् एवं नग्न आगतः। सः उक्तवान् चौरैः लुण्ठित्वा सर्वम् अपहृत्य नग्नः कृतः। सा अकथयत्, 'आदौ एव मया उक्तं हे स्वामिन्, त्वया एवं मञ्जूषां गृहीत्वा मध्यरात्रौ नागन्तव्यम्, भवता अनाकर्णितं तस्मादेतज्जातम्' इति। सः अवदत् यत् यद्यपि बलिष्ठोऽहं किं कुर्याम्। पञ्च षट् वा चौरेभ्यः अलम् अहम्। अत्र तु शतचौराः आगत्य माम् पराजितवन्तः। सर्वं लुण्ठिवा नग्नं कृतवन्तः। पृष्ठे च घातितवन्तः। पश्य, मम पृष्ठम्। आघातेन सह कृमयोऽपि जाताः। सा दृष्टवती ज्ञातवती च यत् तत्र ऊर्वारुकस्य रसं बीजानि च लग्नानि आसन्। भर्त्रे अकथयत् यत् स्वामिन् भयभीतेन भवता एवं चिन्तितं यत् केनापि अहं प्रहृतः तस्माद् असृग् आगतं कृमयश्च जाताः। न तत्सत्यम् भवान् ऊर्वारुकेण प्रहृतः। तस्य रसो बीजानि च लग्नानि।

ततः तस्य स्नानार्थं सा जलमानीतवती। तं प्रक्षाल्य परिधानार्थं तानि वस्त्राणि दत्तानि यानि पूर्वं भयं प्रदर्श्य गृहीतानि आसन्। तानि दृष्ट्वा धीरतया स अवदत्, 'हं, हं, अहं तदा एव त्वाम् अजानाम्' इति। मया चिन्तितं, 'मम भार्या किं कुरुते तत् पश्यामि। अतः भीत इव तत्र स्थित्वा सर्वापहरणम् मया उपेक्षितम्। अन्यथा मत्पुरतः स्त्रियाः का कथा' इति। सा अवदत्, 'तदा एव मया तव बलं ज्ञातम् भवान् गृहेशूर एव' इति। अतः अद्यप्रभृति मञ्जूषां गृहीत्वा मध्यरात्रौ कदापि नागन्तव्यम् इति तस्याः वचनं सः शिरसि धृतवान्।

उपदेशः –

> कथां सुवर्णकारस्य श्रुत्वा लोकाः विवेकिनः ।
> वदेयुः कर्म कुर्युश्च यथाविद्यं यथाबलम् ।।

***********

## १८. भवस्स असारयाए नागदत्तसेट्ठिणो कहा

> अण्णाणावरिया लोगा, पेक्खेज्जा न हियाहियं ।
> ते हसिज्जंति साहूहिं, नागदत्तो व्व सेट्ठिओ ।।

सिरिअंवतीए नयरीए नागदत्तो नाम महारिद्धिमंतो सेट्ठी परिवसइ । तस्स जसोमई नाम भज्जा अत्थि। सो इंदियविसय-सुह-पसत्तो भोगविलासेहिं कालं नएइ । 'पावाणं लच्छी पावकम्मम्मि जुज्जइ' त्ति नाएण तेण कोडिदव्ववएण बारहवरिसेहिं सत्तमालओ महापासाओ निम्मविओ । सो पासाओ तारिसो जाओ जस्स पासाअस्स वरिसाणं सहस्सं जाव कक्खरो वि न खरेज्जा । निप्पन्ने पासाए चित्तगरे बोल्लाविऊण विविह-नर-नारी-तिरिच्छाइणं चित्तकरणत्थं भित्तीओ समप्पिया । ते चित्तगरा वि जणणेत्ताणंदगराणेगचित्तालंकरियभित्तीओ कुणंति ।

अन्नया पच्चूस काले सो सेट्ठी चित्तकरणत्थं पेरेइ, तया तत्थ को वि विसिट्ठो हि णाणजुत्तो महव्वई साहू आगओ । वुड्ढत्तणपारंभे वि विसयवामूढं तं नागदत्तं दट्ठूण किंचि विहसिय सो अग्गओ चलिओ । नागदत्तो वि चिंतेइ – 'चित्तगराणं पेरणं कुणंतं मं निरिक्खिऊण हसित्ता मुणी किं गओ? महप्पाणो कयावि निरत्थयं न

हसेइरे । मइ एयारिसं किं दिट्ठं, जओ हसिऊण गओ । पच्छा अस्स कारणं उवस्सए गंतूण मुणिं पुच्छिस्सामि ।' इय वियारिऊण खणंतरे सो चिंतारहिओ जाओ ।

पुणरवि मज्झण्हसमए सो साहू भिक्खत्थं तस्स घरं समागओ, तया भुंजमाणस्स नागदत्तसेट्ठीणो उस्संगे तस्स पुत्तो कीलेइ, तस्स य भज्जा जसोमई भावओ मुणिं सक्कारिऊण निरवज्जं भिक्खं दाहीय । तथा पिउस्स अंके रममाणेण पुत्तेण मुत्तिऊण सेट्ठिस्स भोयणं वत्थं च भरियं । मुत्तं अवसारिय भुंजंतो नागदत्तो बोल्लेइ – 'हे पिए ! अणेण पुत्तेण मम भोयणं वत्थं च खरंटियं ।' एवं बोल्लमाणे समाणे स साहू नागदत्तं मुहं पासित्ता किंचि वि हसित्ता निग्गओ । हसंतं मुणिं दट्ठूण नागदत्तो पियं कहेइ – 'हे पिए ! इमो मुणि मं पासित्ता हसिऊण गओ, तत्थ किं कारणमत्थि ? किं वा हसणसीलो सो अत्थि ? पहायकाले वि चित्तगराणं विविहचित्त-करणत्थं पेरंतं मं दट्ठूण हसिओ, अहुणा वि हसिऊण गओ ।' जसोमई वएइ – 'हे नाह ! विणाकारणं मुणिणो कयावि न हसंति, अवस्सं किं पि एत्थ पओअणं होज्जा ।' नागदत्तो आह – 'तओ अवस्सं हं मुणिस्स समीवे गंतूण हसणकारणं पुच्छिस्सं ।' एवं वोत्तूण भोयणं काऊण हट्टे गओ ।

अवरण्हकाले हट्टे त्थिओ नागदत्तो कयविक्कयं कुणंतो अहेसि । तया रायपहे एगं बक्करं गिण्हित्ता गच्छमाणस्स चंडालस्स हत्थाओ छुट्टिय सो बक्कारो हट्टत्थियं नागदत्तं पासित्ता तस्स हट्टमारूढो, पच्छा तस्स गहणत्थं चंडालो वि हट्टं आगंतूण नागदत्तं कहेइ – 'इमो बक्करो अम्हच्चओ, तेण मज्झं अप्पेह, जइ तस्सूवरि

किवा होज्जा, तया तस्स जोग्गं मुल्लं दाऊण गिण्हेह ।' चंडालं दट्ठूण सो बक्करो भयभंतो बें बें करंतो हट्टस्स अब्भंतरे पविट्ठो । सेट्ठिणो कम्मगरेहिं पि अंतो पवेसिय दंडेण तं ताडिऊण बाहिरं निक्कासिज्जमाणो वि सो अंतो अंतो पविसेइ । तया नागदत्तो सयमुट्ठाय तस्स अयस्स कण्णं गिण्हित्ता बला हट्टाओ उत्तारेइ । निद्दओ सो चिंतेइ – 'एवं कियंते जीवे रक्खेमि, एवं जीवाणो रक्खणे मम धणं झीणं होज्जा, चंडालो वि सया एवं कुज्जा, तेण निक्कासणं चिय वरं ।' एवं चिंतित्ति बें बें कुणंतो सो हट्टाउ निसारिओ । निस्सारिज्जमाणं अओ चिय अंसुइं मुंचमाणं, सेट्ठिस्स संमुहं पासिऊण 'हे दयालू ! सेट्ठिवर ! अस्स चंडालस्स हत्थाओ मं मोआवेसु ।' इय मणसि पत्थमाणं बक्करं गहिऊण चंडालो गओ ।

जया सेट्ठिणा हट्टाओ बक्करो नीसारिज्जमाणो आसी तया सो साहुवरो थंडिलत्थं गच्छंतो पुणा वि सेट्ठिं पइ किंचि हसिऊण गओ। तया नागदत्तो तइयवारं हसिऊण गच्छंतं मुणिं पासिऊण चिंतेइ – 'एसो मुणिवरो अज्ज वारत्तयं मिलिओ, वारत्तयंपि हसिऊण गओ, एत्थ अवस्सं किं पि कारणं होज्जा । तओ उवस्सए गंतूण हसणकारणं पुच्छिस्सं ।' एवं वियारिय हट्टाओ गिहे गंतूण भोयणं किच्चा रत्तीए उवस्सए गओ ।

साहुं पणमिय पुट्ठं – 'मुणिराय ! अज्ज पभायकाले चित्तगराणं चित्तकरणाय पेरंतं मं दट्ठूण किमट्ठं तुमए हसियं ? सव्वे संसारिणो नियगेहकिच्चाइं न कारिंति ? तो तुम्हेहिं केण कारणेण हसियं ?' ति । 'पुच्छिणाय आगओ हं ।' मुणी कहेइ – 'हे नागदत्त ! तुं भोगविलासेसु पसत्तो निआउस्स अंतं अपासंतो,

चित्तगराणं विविहचित्तकरणत्तं कहेसि, किंतु अस्सिं पासाए मए कियंतकालं जाव वसियव्वं त्ति न पासेसि, अओ विसयवामूढाणं केरिसी ठिइ ? त्ति मए हसियं ।'

नागदत्तो वि मुणिवयणेण आउसं अप्पं पासंतो साहू पुच्छइ – 'हे भयवंत ! मम जीवणसेसं कियंतमत्थि ?' मुणी कहेइ – 'सत्तदिवससेसमत्थि । अज्जप्पभिइ सत्तमे दिवसे संझाकाले तुं मच्चुं पाविहिसि ।' नागदत्तो पुच्छिइ – 'किं भंते ! हं समाहिणा समाहिणा वा असमाहिणा मरणं पाविस्सं ?' मुणिवरो आह – 'नागदत्त ! इओ पंचमे दिवसे तव मत्थए सूलपीडा होस्सइ, तं असहेज्जसूलपीडं तीहिं दिणेहिं अणुभवियं मरणं पाविहिसि ।' नागदत्तो तं सुणियं महप्पाणमग्गओ अप्पाणं हसणपत्तं गणिंतो, अप्पकेरासब्भपउत्तिं धिक्कुणंतो, नेत्तेहिंतो अंसुहिं मुंचंतो साहुं कहेइ – 'हे भदंत ! किल सच्चोहं हसणीओ जाओ, दुल्लहं माणव–भवं पावित्ता मए पोग्गलियसुहपसत्तेण किं पि परलोगाराहणं न कयं, निप्फलो गमिओ मणुसो भवो, अहुणा किं करोमि?' इय बोल्लिऊण रुयंतो मुणिपाएसु पडिओ ।

समणो वि नागदत्तं कहेइ – 'हे सावग! जह रण्णे एक्को महारुक्खो अत्थि, तत्थ संझाए दूरयराओ आगच्छिऊण पक्खिणो साहासु वसंति, पुणो पहाए संजाए उड्डेऊण अन्नत्थ संचलंति, पुणो मिलेज्ज न वा मिलेज्जा एवं भवे एयारिसो कुडुंबमेलो जाणियव्वो । अप्पणो एव अत्थसाहणपरा सत्थिया सव्वे संसारिणो जीवा नायव्वा, तुमं पि अप्पस्स अत्थं साहेसि ।'

नागदत्तो पढमहासस्स कारणं नच्चा अप्पाणं अहण्णं मण्णमाणो बीयवार–हसणस्स कारणं पुच्छइ । मुणी कहेइ – 'हे नागदत्त ! भज्जापुत्ताइसु मूढप्पाणो संसारसरूवं न जाणेइरे, जओ तुं जं पुत्तं मन्नेसि, जेण पुत्तेण आणंदिओ होज्जा, जस्स मुत्तेण भरियं पि भोयणं पियं गणेसि, सो तुज्झ पुत्तो तओ भज्जाए जारपुरिसो आसि। नायसवरूवेण तए एसो हणिओ समाणो, मरिऊण तव भज्जाए पुत्तत्तणेण समुववन्ना । तुं सत्तुं पि पियं पुत्तं मन्नेसि, जया सो तुह पुत्तो जोव्वणवंतो होस्सइ तया तव घरुवक्खरजुवभव्वपासायं विक्केहिइ । तव भज्जाए विसं दाऊण मारिस्सइ, तुम्ह पुत्तो कुले कुलंगालो होही । संसारीणं एरिसी ठिइ । इय चिंतिऊण मए बीयवारं पि हसियं ।

एयं सुणित्ता नागदत्तो कहेइ – 'हे भगवंत ! पुंछलिए भज्जाए, पुत्तत्तणेण य उप्पन्नस्स सत्तुणो सरूवं जाणिऊण किल भोगेहिं हं वंचिउं म्हि । अहुणा मज्झ तं कहिज्जाह जं मए हट्टाओ निस्सारिज्जमाणं बक्करं दट्ठूण तुमए हसियं ।' मुणिवरो कहेइ – 'नागदत्तो ! एसो बक्करो पुव्वभवे तव पिया आसी । जेण महापरिग्गहतिण्हाए सो मूढप्पा अणीईए बहुदव्वं संचिऊण मरणकाले तुम्ह सव्वदव्वं अप्पिऊण पावकम्मणा एसो बक्करो संजाओ । जेण तस्स चंडालस्स पुव्वभवे बहुदव्वगहणेण अप्पो कप्पासो अप्पिओ । तेण एसो रिणमोक्खत्थं अस्स चंडालस्स हत्थे आगओ । अज्झ चंडालो एयं बक्करं गहिऊण रायपहम्मि गच्छंतो अहेसि, तया एसो बक्करा अप्पणो हट्टं पुत्तं च णिरिक्खिऊण जाइसरणं पाविऊण तुमं सरणं आगओ । चंडालेण कयणत्थं कहिएण लोहंधेण तुमए सो न गहिओ । तेण मए हे नागदत्त ! तइयवारं पि हसियं ।'

एवं सोच्चा मए पिया वि न रक्खिओ त्ति अप्पाणं धी धी करिंतेण तेण सिग्घं उत्थाय चंडालघेरं गच्छिऊण कहियं – 'हे चंडाल ! जहिच्छियं दव्वं गहिऊण बक्करं मज्झ देसु ।' तेणुत्तं – 'सेट्ठि ! सो अहुणा एव मारिओ, कहमप्पेमि?' एवं सुणित्ता अप्पं णिंदंतो मुणिवरस्स पासम्मि गच्छित्ता पुच्छीय – 'मम पिया मरणं पाविय केसिं गइं गओ?'। मुणि कहेइ – 'सरणमागयं पियरं अरक्खमारं तुमं धिक्कारिंतो अट्टरोद्दज्झाणेण सो मरणं पाविय नरयं गओ' । तया नागदत्तो पिउस्स दुग्गइं सोच्चा निरयदुहाओ बीहंतो मुणिं कहेइ – 'हे भगवंत ! मं तारय, मं तारय, सत्तदिणेण हं किं करिस्सं? कहमप्पाणं तारइस्सं? हे दयाभंडार ! मम सप्पहं दंसेहि दंसेहि' त्ति ।

मुणिवरो आह – 'हे नागदत्त ! एगदिवससंजमपालणेण वि भव्वजीवो अवस्सं वेमाणिओ होज्जा । किं पुणो सत्तदिणेण ?' एवं सोच्चा संसारस्स असारयं भाविंतो, सत्तक्खेत्तेसु नियदव्वं अप्पित्ता जिणमंदिरे अट्ठाहियामहूसवं कारित्ता एयस्स मुणिवरस्स सगासे संजमं गिण्हीय । अणसणेण सुहेण चत्तारि दिणा गया । पंचमे दिणे तस्स सिरंसि महासूलवेयणा असहेज्जा जाया । गुरुवरस्स वयणसुहावुट्ठीए समभावेण वेयणं सहंतो समाहिणा कालं किच्चा वेमाणियदावलोगे सोहम्मकप्पे देवत्तणेण समप्पन्नो । एवं आउसस्स सत्तदिणे सेसे वि संजमं पालिऊण आराहगो नागदत्तो जाओ । उवएसो –

नागदत्तकहं सोच्चा, भवरूवपयंसिणिं ।
कामभोगाइअं चिच्चा जएह संजमे वरे ।।

# असारविषये नागदत्तश्रेष्ठिकथा।

अज्ञानावृता लोकाः प्रेक्षन्ते न हिताहितम्।
साधुभिः उपहस्यन्ते श्रेष्ठी नागदत्त इव।।

श्रीअवन्तीनगर्यां नागदत्तो नाम महाश्रेष्ठी न्यवसत्। तस्य यशोमती नाम भार्या। सः इन्द्रियविषयसुखप्रसक्तः भोगविलासैः कालं नयति स्म। 'पापधनं पापकर्मणि एव युज्यते' इति न्यायेन कोटिधनं व्ययीकृत्य द्वादशवर्षेषु तेन सप्तभवनयुक्तः प्रासादः निर्मितः। सः प्रासादः सहस्रवर्षपर्यन्तं चिरस्थायी स्यात्। अनन्तरं चित्रकारान् आहूय स्त्री-पुरुष-पशु-पक्षिणां चित्ररेखनार्थं तेभ्यः भित्तयः समर्पिताः। ते चित्रकाराः जननेत्रानन्दकराः भित्तीः कृतवन्तः।

एकदा प्रत्यूषे यदा सः श्रेष्ठी चित्रकारान् प्रेरयति तदा विशिष्टावधिज्ञानयुक्तः कोऽपि साधुः तत्रागतः। वृद्धत्वे प्रविशन्तं विषयव्यामूढं तं दृष्ट्वा स साधुः विहस्य अग्रे प्रचलितः। नागदत्तः व्यचिन्तयत्, 'चित्रकारान् प्रेरयन्तं मां दृष्ट्वा हसित्वा स मुनिः कस्माद् अग्रे प्रचलितः। महामुनयः कारणं विना न हसनशीलाः। मयि एतादृशं किं दृष्टं येन हसित्वा गतः। अनन्तरम् अस्य कारणम् उपाश्रयं गत्वा पृच्छामि' इति विचिन्त्य क्षणाद् आश्वस्तः जातः।

पुनरपि मध्याह्नसमये स साधुः भिक्षायै तस्य गृहम् आगतः। तदा भुञ्जानस्य श्रेष्ठिनः अङ्के तस्य पुत्रः अक्रीडत्। तस्य भार्या यशोमती श्रद्धया साधवे सत्कृतिं विधाय भिक्षाम् अयच्छत्। तदा श्रेष्ठ्यङ्कोपरि क्रीडता बालकेन मूत्रं विसृज्य तस्य भोजनं वस्त्रं च मलिनं कृतम्। तद् अपसार्य भुञ्जानः नागदत्तः अवदत्, 'प्रिये, अनेन

पुत्रेण मम भोजनं वस्त्रं च मलिनं कृतम्’ इति। एवं भाषमाणं तं दृष्ट्वा किञ्चिद् विहस्य स साधुः निर्गतः। हसन्तं तं दृष्ट्वा स श्रेष्ठी भार्याम् अवदत्, ‘हे प्रिये, अयं मुनिः मां दृष्ट्वा हसित्वा निर्गतः किं कारणं स्यात्। अपि वा हसनशीलः अयम् । प्रत्यूषे चित्रकारान् विविधचित्रार्थं प्रेरयन्तं मां दृष्ट्वा हसितः, अधुनापि तथैव’ इति। यशोमती उवाच, ‘हे नाथ, कारणं विना मुनयः कदापि न हसन्ति। अवश्यं किमपि कारणं स्याद्’ इति। तर्हि अवश्यं तत्र गत्वा हसनकारणं पृच्छामि, इति उक्त्वा भुक्त्वा च नागदत्तः आपणं गतः।

अपराह्णकाले नागदत्तः क्रयविक्रयम् अकरोत्। तदा राजपथे एकम् अजं गृहीत्वा गच्छतः चण्डालस्य हस्ताद् एकः अजः विमुच्य आत्मानं नागदत्तस्य आपणे तस्य समीपमागतः। तत्पश्चात् चाण्डालोऽपि नागदत्तापणम् आगत्य तमुवाच, ‘मम एव अयम् अजः। तस्मात् मह्यं देहि। करुणा अस्ति चेद् योग्यं मूल्यं देहि’ इति। चाण्डालं दृष्ट्वा भयभीतः सः अजः बें बें (मे मे) कुर्वन् आपणान्तं गतः। श्रेष्ठिनः कर्मकराः तं दण्डेन ताडयित्वा बहिः प्राचोदयन् तथापि स अन्तः एव प्रविष्टः। तदा नागदत्तः स्वयम् उत्थाय तम् अजं कर्णेन गृहीत्वा बलात् आपणात् निष्कासितवान्। निर्दयः सः नागदत्तः चिन्तितवान्, ‘एवं कियतः जीवान् रक्षेयम्। अनेन मम धनं क्षयं गच्छेत्, चाण्डालोऽपि तथैव वर्तते। अतः निष्कासनं वरम्’ । एवं चिन्तयन् सः बें बें इति आक्रोशन्तं तम् अजं निष्कासितवान्। एवं निष्कासितः स अजः साश्रुनयनः श्रेष्ठिनम् अभिमुखो भूत्वा मनसि एवम् अवदत्, ‘हे दयालो, श्रेष्ठिवर, अस्मात् चाण्डालहस्तात् मुञ्च माम्’ इति प्रार्थयमानं तम् अजं गृहीत्वा चाण्डालः गतः। अजं निष्कासयन्तं श्रेष्ठिनं दृष्ट्वा शुद्धभूमिं

गच्छन् सः साधुः अहसत्। तदा नागदत्तोऽपि तृतीयवारं हसन्तं तं साधुं दृष्ट्वाऽचिन्तयत् यत् अयं मुनिवरः अद्य त्रिवारं मिलितः। त्रिवारमपि हसित्वा गतः। अत्र अवश्यं किमपि कारणं स्यात्। तर्हि उपाश्रयं गत्वा हास्यकारणं पृच्छामि। एवं विचिन्त्य आपणात् गृहं गत्वा भुक्त्वा रात्रौ उपाश्रयं गतः।

साधुं प्रणम्य अपृच्छत् 'मुनिराज, अद्य प्रभाते चित्रकारान् चित्रकरणार्थं सूचयन्तं मां दृष्ट्वा कस्माद् हसितवान्। सर्वे संसारिणः निजगेहकर्म न कारयन्ति किम्। तर्हि भवता किमर्थं हसितम् इति प्रष्टुमहमत्र समागतवान्'। मुनिरुक्तवान्, 'हे नागदत्त, भोगविलासे प्रसक्तः त्वम् आत्मनः क्षीयमाणमायुः अदृष्ट्वा चित्रकारेभ्यः विविधचित्रकरणार्थं कथयसि। किन्तु एतेषां चित्राणां सन्निधौ मम कियान् कालः गच्छेद् इति न चिन्तयसि। अतः विषयव्यामूढस्य का स्थितिः' इति चिन्तयित्वा अहसम्।

नागदत्तोऽपि मुनिवचनेन आत्मनः आयुः न्यूनम् अवशिष्टम् इति ज्ञात्वा मुनिमपृच्छत्, 'हे भगवन्, मम कियद् आयुः अवशिष्टम्'। मुनिरवदत्, 'सप्तदिनानि अवशिष्टानि। अद्यप्रभृति सप्तमे दिने सायङ्काले त्वं म्रियसे' इति। नागदत्तः पृष्टवान्, 'अप्यहं समाधिमरणं म्रिये असमाधिमरणं वा' इति। मुनिरकथयत्, 'अद्यप्रभृति पञ्चमे दिने तव मस्तके शूलपीडा भवेत्। तां असह्यवेदनां दिनत्रयम् अनुभूय म्रियसे' इति। नागदत्तः तच्छ्रुत्वा अस्मिन् महनीयानां पथि हास्यास्पदोऽहम् इति मत्वा आत्मनः असभ्यप्रवृत्तिं गर्हयित्वा साश्रुनयनः साधुमवदत्, 'हे भगवन्, अहं हास्यास्पदः खलु। दुर्लभं मानवजन्म प्राप्य अस्मिन् पुद्गलिकसुखे

निमज्जमानेन मया परलोकाराधनं न कृतम्। निष्फलं मम मनुष्यजन्म। अधुना किं करोमि' इति उक्त्वा रुदन् मुनिपादयोः पतितः।

श्रमणोऽपि नागदत्तमुवाच, 'हे श्रावक, यथाऽरण्ये एको महावृक्षः तत्र सायङ्काले दूराद् आगत्य पक्षिणः वसन्ति, पुनः प्रत्यूषे अन्नार्थम् उड्डीयन्ते। पुनश्च मिलन्ति न वा, भवेऽपि कुटुम्बमेलनमेवमेव। स्वार्थपरायणाः सर्वे जीवाः। त्वमपि आत्महितं कुरु' इति।

नागदत्तः प्रथमं हास्यकारणं ज्ञात्वा आत्मानम् अधन्यं मत्वा द्वितीयं हास्यकारणम् अपृच्छत्। तदा मुनिरवोचत्, 'हे नागदत्त, भार्यापुत्रेषु रतः मूढः जीवः स्वरूपं न जानाति। यं पुत्रं त्वं प्रियं मन्यसे, येन आनन्दितो भवसि, यन्मूत्रपूरितं भोजनम् अपि प्रियम् अस्ति, स तव पत्न्याः जारपुरुषः । पूर्वजन्मनि नागस्वरूपे विद्यमानेन त्वया स हतः। मृत्वा स तवैव भार्यायाः जातः। एतं तव वैरिणं यं त्वं प्रियं पुत्रम् इति मन्यसे, स यौवने इदं गृहोपस्कारभवनादीनि विक्रीणीत। तव भार्यायै विषं दत्त्वा तां मारयिष्यति। तव पुत्रः कुले कुलाङ्गारः। संसारिणां स्थितिः ईदृशी एव' एवं विचिन्त्य अहं पुनः हसितवान्।

एवं श्रुत्वा नागदत्तः उवाच, 'हे भगवन्, अस्याः पुंश्चलीभार्यायाः पुत्रत्वेन जातस्य वैरिणः च स्वरूपं ज्ञात्वा भोगैः खलु वञ्चितोऽहम् । अधुना एतत् कथय यत् यदा अहं तम् अजं निष्कासयितुं प्रायते तदा अपि भवान् कुतः हसितवान्' इति।

मुनिवरोऽवदत्, 'अयि नागदत्त, अयम् अजः पूर्वजन्मनि तव पिता। यया महापरिग्रहतृष्णया स मूढात्मा अनीत्या बहुधनं संचित्य मृत्युकाले तुभ्यं सर्वं द्रव्यं दत्त्वा पापकर्मणा अजः भूतः । अनेन पूर्वजन्मनि बहुधनेन अल्पकार्पासं चाण्डालाय दत्तं, तस्माद् ऋणात् मुक्त्यर्थम् अयं चाण्डालहस्तं गतः। अद्य चाण्डाले राजपथं गतवति अयम् अजः आत्मनः आपणं पुत्रं च दृष्ट्वा जातिस्मरणवशात् त्वाम् आश्रयत। चाण्डालः अजम् आदातुम् उक्तवान् तथापि लोभान्धेन त्वया न गृहीतः अजः। अत एव तृतीयवारं हसितवान्।

एवं श्रुत्वा, 'मया पिताऽपि न रक्षितः अतः धिङ् माम्' इति उक्त्वा शीघ्रतया उत्थाय चाण्डालगृहं गत्वा अवदत्, 'हे चाण्डाल, यथेच्छं धनं गृहीत्वा अजं मह्यं देहि' इति। तेनोक्तं यद् हे श्रेष्ठिन्, अधुना एव घातितः, कथं दास्यामि। तच्छ्रुत्वा आत्मानं विनिन्द्य मुनिवरसमीपं गत्वा तेन पृष्टं यत् मम पिता मृत्वा कां गतिमगच्छत्। मुनिः अवदत्, 'शरणागतं पितरम् अरक्षन्तं त्वां धिक्कृत्य अष्टरौद्रध्यानेन स मृत्वा निरयं गतः'। तदा नागदत्तः पितुः दुर्गतिं श्रुत्वा निरयदुःखभयेन मुनिमवदत्, 'हे भगवन्, तारय मां, तारय माम्। सप्तदिनेषु किं कुर्याम्? कथमात्मानं तारयेयम्। हे दयानिधे, मां सत्पथं दर्शय, दर्शय' इति।

मुनिवरः अकथयत्, 'हे नागदत्त, एकदिनसंयमेन भव्यजीवः अवश्यमेव वैमानिकः भवति। किं पुनः सप्तदिनैः' इति। तच्छ्रुत्वा श्रेष्ठिना संसारस्य असारत्वं विचिन्त्य सप्तक्षेत्रेषु निजद्रव्यं समर्प्य जिनमन्दिरे अष्टाह्निकमहोत्सवं कृत्वा अस्य मुनिवरस्य समीपं संयमः स्वीकृतः। अनशनेन सुखेन चतुर्दिनानि व्यतीतानि। पञ्चमे दिने

तस्य शिरसि असह्या शूलवेदना सञ्जाता। गुरुवरवचनसुखवृष्ट्या समभावेन वेदनां सहमानः समाधिना देहं विसृज्य वैमानिकदेवलोके सौधर्मकल्पे देवत्वेन समुत्पन्नः। एवम् आयुषः सप्तदिनेषु अवशिष्टेषु संयमी भूत्वा नागदत्तः मोक्षसाधकः बभूव।

नागदत्तकथां श्रुत्वा भवरूपप्रदर्शिनीम्।
कामभोगादिकांस्त्यक्त्वा वृणीष्व संयमं वरम्॥

********

## १९. पुत्तेहिं पराभवियस्स पिउस्स कहा

जाव दव्वं विइण्णं न, पुत्ता ताव वसंवया।
पत्ते दव्वे य सच्छंदा हवंति दुक्खदायगा॥१॥

कंमिवि नयरे एगवुड्ढस्स चउरो पुत्ता संति। सो थविरो सव्वे पुत्ते परिणाविऊण नियवित्तस्स चउब्भागं किच्चा पुत्ताणं अप्पेइ। सो धम्माराहणतप्परो निच्चिंतो कालं नएइ। कालंतरे तं पुत्ता इत्थीणं वेमणस्सभावेण भिन्नघरा संजाया। वुड्ढस्स पइदिणं पइघरं भोयणाय वारगो निबद्धो। पढमदिणंमि जेट्ठस्स पुत्तस्स गेहे भोयणाय गओ। बीयदिणे बीयपुत्तस्स घरे जाव चउत्थदिणे कणिट्ठस्स पुत्तस्स घरे गओ। एवं तस्स सुहेण कालो गच्छइ। कालंतरे थेराओ धणस्स अपत्तीए पुत्तवहूहिं सो थेरो अवमाणिज्जइ। पुत्तवहूओ कहिंति – 'हे ससुर ! अहिलं दिणं घरंमि किं चिट्ठसि ? अम्हाणं मुहाइं पासिउं किं ठिओ सि ? थीणं समीवे वसणं पुरिसाणं न जुत्तं, तव लज्जावि न आगच्छेज्जा, पुत्ताणं हट्टे गच्छिज्जसु' एवं पुत्तवहूहिं अवमाणिओ सो पुत्ताणं हट्टे गच्छइ। तया पुत्तावि कहिंति – 'हे वुड्ढ! किमत्थं

एत्थ आगओ ? वुड्ढत्तणे घरे वसणमेव सेयं, तुम्ह दंता वि पडिआ, अक्खितेयं पि गयं, सरीरं पि कंपिरमत्थि, अत्थ के किंपि पओअणं णत्थि, तम्हा घरे गच्छाहि ।' एवं पुत्तेहिं तिरक्करिओ सो घरं गच्छेइ, तत्थ पुत्तवहूओ वि तं तिरक्करंति । पुत्तपुत्ता वि तस्स थेरस्स कच्छुट्टियं निक्कासेइरे, कयाई मंसुं दाढियं च करिसिंति ।

एवं सव्वे विविहप्पगारेहिं तं वुड्ढं उवहसिंति । पुत्तवहूओ भोयणे वि रुक्खं अपक्कं च रोट्टगं दिंति । एवं पराभविज्जमाणो वुड्ढो चिंतेइ – 'किं करोमि, कहं जीवणं निव्वहिस्सं ?' एवं दुहमणुभवंतो सो नियमित्तसुवण्णागारस्स समीवे गओ । अप्पणो पराभवदुहं तस्स कहेइ, नित्थरणुवायं च पुच्छइ ।

सुवण्णगारो बोल्लेइ – 'भो मित्त ! पुत्ताणं वीसासं करिऊण सव्वं धणमप्पिअं, तेण दुहिओ जाओ तत्थ किं चोज्जं ? राहत्थेण कम्मं कयं, तं अप्पणा भोत्तव्वं चिअ । तह वि मित्ततेण हं एवं उवायं दंसेमि – तुमए पुत्ताणं एव कहियव्वं – 'मम मित्तसुवण्णगारस्स गेहे रूवग–दीणार–भूसणेहिं भरिआ एगा मंजूसा मए मुक्का अत्थि, अज्ज जाव तुम्हाणं न कहिअं, अहुणा जराजिण्णो हं, तेण सद्धम्मकम्मणा सत्तक्खेत्ताईसुं लच्छीए विणिओगं काऊण परलोगपाहेयं गिण्हिस्सं एवं कहिऊण पुत्तेहिं एसा मंजूसा गेहे आणावियव्वा । मंजूसाए मज्झे हं रूवगसयं मोइस्सं, तं तु मज्झरत्तीए पुणो पुणो तुमए सयं च सहस्सं च रणरणयारपुव्वं गणेयव्वं', जेण पुत्ता मन्निसंति – 'अज्जावि बहुधणं पिउणो समीवे अत्थि', तओ धणासाए ते पुव्वमिव भत्तिं करिस्संते । पुत्तवहूओ वि तहेव सक्कारं काहिंति । तुमए सव्वेसिं कहियव्वं – 'इमीए मंजूसाए

बहुधणमत्थि । पुत्तपुत्तवहूणं नामाइं लिहिऊण ठवियमत्थि । तं तु मम मरणंते तुम्हेहिं नियनियनामेण गहिअव्वं । धम्मकरणत्थं पुत्तेहिंतो धणं गिण्हिऊण सद्धम्मकरणे वावरियव्वं । मम रूवगसयं पि तुमए न विस्सारियव्वं, एयं अवसरे दायव्वं ।' सो थेरो बुद्धीए तुट्ठो गेहं गच्चा मंजूसं आणाविऊण रत्तीए तं रूवगसयं सय-सहस्स-दससहस्साइगुणणेण पुणो पुणो गणेइ । पुत्ता वि वियारिंति - 'पिउस्स पासे बहुधणमत्थि' त्ति, तओ ते वहुणं पि कहिंति । सव्वे ते थेरं बहुं सक्कारिंति सम्माणिंति य । अईव निब्बंधेण तं पुत्तवहुआ वि अहमहमिगयाए भोयणाय निंति, साउं सरसं भोयणं दिंति, तस्स वत्थाइं वि सएव पक्खालेंति, परिहाणाय धुवियाइं वत्थाइं अप्पिंति। एवं वुड्ढस्स सुहेण कालो गच्छइ ।

एगया आसन्नमरणो सो पुत्ताणं कहेइ - 'मज्झ धम्मकरणेच्छा वट्टइ, तेण सत्तखेत्तेसुं किं चि वि धणं दाउं इच्छामि।' पुत्ता वि मंजूसागयधणासाए अप्पिंति । सो वुड्ढो जिण्णमंदिरूवस्सयसुपत्ताईसु जहसत्तीं दव्वं देइ । अप्पणो परममित्तसुवण्णगारस्स वि णियहत्थेण रूवगसयं पच्चप्पइ, एवं सद्धम्मकम्मम्मि धणव्वयं किच्चा, मरणकालंमि पुत्ताणं पुत्तवहूणं च बोल्लाविऊण कहेइ - 'इमीए मंजूसाए नामग्गहणपुव्वयं मए धणं मुत्तमत्थि । तं तू मम मरणकिच्चं काऊण पच्छा जह नाम तुम्हेहिं गहियव्वं' त्ति कहिऊण समाहिणा सो वुड्ढो कालं पत्तो । पुत्ता वि तस्स मच्चुकिच्चं किच्चा नाइजणं पि जेमााविऊण बहुधणासाई जया सव्वे मिलिऊण मंजूसमुग्घाडिंति, तया तम्मज्झंमि नियनियनामजुत्तपत्तेहिं वेढिए पाहाणखंडे तं च रूवगसयं पासित्ता, 'अहो! वुड्ढेण अम्हे वंचिया वंचिय' त्ति जंपंति किल अम्हाणं

पिउभत्तिपरम्मुहाण अविणअस्स फलं संपत्तं। एवं सव्वे ते दुहिणो जाया । उवएसो -

> पुत्तेहिं पत्तवित्तेहिं, पियरस्स पराभवं ।
> सोच्चा तहा पयट्टेज्जा सुहं वुड्ढत्तणे जह ।।२।।

## पुत्रपराभूतपितृकथा।

> अवितीर्णे धने पुत्रा भवन्ति हि वशंवदाः ।
> प्राप्ते द्रव्ये च स्वच्छन्दा भवन्ति दुःखदायकाः ।।

कस्मिंश्चिन्नगरे कस्यचिद् वृद्धस्य चत्वारः पुत्राः। सः वृद्धः तेषां पुत्राणां विवाहान् कृत्वा स्वसम्पत्तिं चतुर्धा व्यभजत्। धर्माराधननिमग्नः सः सुखेन कालमनयत्। कालान्तरेण पत्नीनां वैमनस्येन ते पुत्राः विभक्ताः। प्रतिदिनं भोजनाय तस्य वृद्धस्य दिनानि निश्चितानि। प्रथमे दिने ज्येष्ठपुत्रस्य गृहे। द्वितीये दिने द्वितीयपुत्रस्य। अनया रीत्या चतुर्थे दिने कनिष्ठपुत्रगृहं स गच्छति स्म। एवं प्रकारेण सुखेन कालं नयति स्म सः। कालान्तरेण एतस्माद् वृद्धात् धनं न लभेमहि इति विचिन्त्य तस्य पुत्रवध्वः तम् अवामन्यन्त। पुत्रवध्वः कथयन्ति, 'हे श्वशुर, सम्पूर्णं दिनं यावत् कस्मात् गृहे एव तिष्ठति भवान्। अस्माकं मुखानि कस्मात् निरीक्ष्यन्ते। भवतः स्त्रीभिः सह एतादृशं वर्तनं न साधुपुरुषयोग्यम्। भवान् न लज्जते किम्? गच्छतु, पुत्रापणे तिष्ठतु' इति। एवं पुत्रवधूभिः अवमानितः सः पुत्रापणं गतः । तदा पुत्राः अवदन्, 'हे वृद्ध, किमर्थम् अत्र आगतः। वृद्धत्वे गृहे वासः श्रेयान्। भवतः दन्ता अपि पतिताः। दृष्टिः क्षीणा। शरीरं कम्पते। अत्र भवतः न

किमपि प्रयोजनम्। तस्माद् गृहं गच्छतु' इति। एवं पुत्रैः तिरस्कृतः स गृहं गतः तत्र पुत्रवधूभिश्च तिरस्कृतः। तस्य प्रपौत्रा अपि तस्य वस्त्रम् सोपहासम् आकर्षन्ति स्म क्वचित् श्मश्रूमपि। एवं विविधप्रकारैः तं वृद्धम् उपहसन्ति। पुत्रवध्वः रूक्षम् अपक्वं वा भोजनं यच्छन्ति स्म। एवं पराभूतः स वृद्धः व्यचिन्तयत्, 'किं करोमि, कथम् आयुः यापनीयम्' इति। एवं दुःखम् अनुभवन् स्वसुहृदं सुवर्णकारम् प्रति अगच्छत्। स्वपराभवं तस्मै अकथयत् उपायं च अपृच्छत्।

सुवर्णकारः अवदत्, 'भो मित्र, पुत्रेषु विश्वस्य, सर्वं धनं तेभ्यः समर्पितम् अतः दुःखम् । तत्र किम् आश्चर्यम्। स्वहस्तेन कृतं कर्म स्वेनैव भुज्यते। तथापि मित्रत्वाद् एकम् उपायं दर्शयामि'। त्वं पुत्रेभ्यः एवं कथय। 'मम सुवर्णकारमित्रस्य गृहे रूप्य-दिनार-आभूषणपूर्णा एका मञ्जूषा मया स्थापिता। अद्ययावत् भवद्भयः न कथितम्। अधुना जराजर्जरोऽहम् । तस्मात् सद्धर्मकर्मणा सप्तक्षेत्रेषु धनं विनियुज्य परलोकपाथेयं प्राप्नोमि' इति कथयित्वा पुत्रैः सा मञ्जूषा गृहं नेतव्या। तस्यां मञ्जूषायां शतरूप्यकाणि मुञ्चेयम्। तानि शतरूप्यकाणि शतम्, सहस्रम् इति अनुनाद्य परिगणनीयानि, येन पुत्राः मन्येरन् यद् अद्यापि पितुः समीपं बहु धनं विद्यते। ततः धनाशया ते पूर्ववत् त्वां भजिष्यन्ते। पुत्रवध्वः अपि तथैव सत्कारं करिष्यन्ति। त्वं सर्वेभ्यः कथय यद् अस्यां मञ्जूषायां बहु धनमस्ति। पुत्र-पुत्रवधूनां नामानि तत्र लिखितानि। मत्पश्चात् स्वनामानुसारं ग्रहीतव्यम्। धर्मार्थं पुत्रेभ्यः द्रव्यं स्वीकृत्य सद्धर्मार्थम् उपयुञ्जस्व। मम शतरूप्यकाणि मा विस्मार्षीः तदवसरे प्रत्यर्पणीयानि इति।

स: स्थविर: सुवर्णकारबुद्धया सन्तुष्ट: गृहं गत्वा, पुत्रै: मञ्जूषाम् आनीय निशायां तानि शतरूप्यकाणि शतं, सहस्रं, दशसहस्रम् इति पुन: पुन: परिगणयामास। पुत्रा: अचिन्तयन्, 'पितु: समीपं बहु धनमस्ति'। तथैव तै: भार्याभ्य: अपि कथितम्। सर्वेऽपि ते तं स्थविरम् अपूजयन्। अतीव प्रेम्णा ता: पुत्रवध्व: अपि अहमहमिकया तं गृहं नीत्वा स्वादुसरसभोजनेन अभुञ्जयन्। तस्य वस्त्राण्यपि स्वयमेव प्राक्षालयन्। परिधानार्थं शुद्धवस्त्राणि अददन्। एवं वृद्धस्य काल: सुखेन अगच्छत्।

एकदा मरणासन्न: सन् स पुत्रेभ्य: अकथयत्, 'मम धर्मकरणेच्छा वर्तते, तेन सप्तक्षेत्रेषु धनं दातुम् इच्छामि'। पुत्रा अपि मञ्जूषायां विद्यमानधनाशया द्रव्यमयच्छन्। स: स्थविर: जीर्णमन्दिरे, उपाश्रये सुपात्रेभ्य: च यथाशक्ति दानमयच्छत्। निजपरमसुहृदे सुवर्णकाराय अपि स्वहस्तेन शतरूप्यकाणि अयच्छत्। एवं सद्धर्मार्थं धनं व्ययीकृत्य मरणसमये पुत्रान् पुत्रवधूंश्च आहूय उक्तवान्, 'अस्यां मञ्जूषायां सर्वेषां नामग्रहणपूर्वकं धनं निक्षिप्तम् अस्ति। मम और्ध्वदेहिकानन्तरं यथानाम भवद्भि: स्वीकर्तव्यम्' इति उक्त्वा समाधिम् आश्रित्य स पञ्चत्वं गत:। पुत्रा: अपि तस्य और्ध्वदेहिकं परिसमाप्य आप्तान् भोजयित्वा बहुधनाशया सर्वे मिलित्वा ताम् मञ्जूषाम् उदघाटयन्। तदा तेषां नामग्रहणेन आवृता: सकर्गजा: पाषाणखण्डा: शतरूप्यकाणि च प्राप्तानि। 'अहो, स्थविरेण वञ्चिता:, वञ्चिता:' इति विलप्य पितृभक्तिपराङ्मुखै: अस्माभि: आत्मन: अविनयस्य इदं फलं प्राप्तम् इति मत्वा सर्वे ते दु:खिता: जाता:।

प्राप्तधनैश्च पुत्रैः यः पिता रङ्कोऽवमानितः ।
पुनः धनाया मानं प्राप्तवान् बुद्धिमाश्रितः ।।

*********

## २०. किवणसेट्ठिस्स कहा

किवणा धणिणो केई, दिज्जा दव्वं कयावि णो ।
कुज्जा गालिपयाणं तु जहपुत्तस्स सेट्ठिणं ।।१।।

कम्मि वि नयरे एगो सेट्ठिपुत्तो वरिवट्टइ । भवियव्वया जोगेण सो अईव णिद्धणो जाओ । उत्तमकुलुप्पन्नत्तणेण कस्स वि पासे किं पि न मग्गेइ, तो तस्स पुत्ता वि पुण्णभोयणापत्तीए दुहिया हुंति । तया पुत्तदुक्खेण दुहिया भज्जा कहेइ – 'हे सामी ! एए पुत्ता भोयणाभावेण मरिस्संति, तुम्हाणं पुत्तदुक्खं पासिऊण किं दया नागच्छइ ? अओ पुत्ताणमुवरि अणुकंपं काऊण कस्स वि पासे गंतूण किं पि आणेऊण पुत्ते पालेह, अन्नहा ते मरिस्संति, तेसिं हच्चाजायपावं पि तुम्हाणं लग्गिस्सइ ।' सो भज्जं कहेइ – 'अज्ज जाव मए कस्स वि पासे न मग्गियं, अहुणा हं कत्थ गच्छामि ? कं पत्थेमि ?।' भज्जा आह – 'तुम्हे पिउमित्तसिट्ठिघरे गच्छिज्जाह, सो अवस्सं किं पि दाहिइ ।' भज्जाए अइवग्गहेण सो नियपिउमित्तसेट्ठिस्स घरे गओ, तया सो सेट्ठी आसणे उववेसिय आयव्वयनामाइं लिहंतो अत्थि, तं नमित्ता अग्गओ सो उवविट्ठो । 'एसो धणहीणो संजाओ, तेण किं पि मग्गिउं आगओ । अओ मउणं चिय सेयं' त्ति चिंतिऊण सेट्ठी लिहणपरो चिट्ठइ । तेण य सह वत्तालावं पि न करेइ । सेट्ठिपुत्तो चिंतेइ – 'अहुणा एसो कज्जाउलो

अत्थि । कज्जसमत्तीए मं पुच्छिहिइ' त्ति चिंतिऊण तत्थ च्चिय उवविसइ । एवं जामद्धे गए सेट्ठिणा चिंतियं – 'एसो न गमिहिइ, कं पि उवायं करोमि ।'

उवलद्धबुद्धी सो आसणे सुविऊण आसीसपायं अप्पाणं वत्थेण आवरिऊण संठिओ । तया सो सेट्ठिपुत्तो चिंतेइ – 'एसो अईवसंतो अत्थि, तेण सुत्तो, तवो हं इमस्स पायसंवाहणं करेमि ।' तओ सो सेट्ठिस्स पायसंवाहणं करेइ । सेट्ठिणा तया नायं । मम किंकरो संवाहणं कुणेइ, तया कम्मकरं समुद्दिसिय सेट्ठी पुच्छेइ – 'एसा बला किं गया?' तं सुणित्ता सेट्ठिपुत्तो चिंतेइ – 'एसो किं न पुच्छइ, धणं पि न देइ, गालिं तु देइ, तओ अस्स पच्चुत्तरं पि सम्मं दायव्वं' त्ति चिंतिऊण सेट्ठिपुत्तो कहेइ – 'एसा बला न गया, किंतु तुम्ह गले वग्गिया, गहणं विणा न गच्छेज्जा ।' एवं सोच्चा सिग्घं उवविट्ठो समाणो नियकम्मगराहिवइं कहेइ – 'किं पि दाऊण एणं निस्सारय णिस्सारय', त्ति तया किंकराहिवई सेट्ठिपुत्तस्स एगं रूवगं दाऊण निक्कासेइ । सो सेट्ठिपुत्तो घरे गंतूण नियभज्जं कहेइ – 'सुहम्मि सहेज्जगेरा जणा बहवो हुंति, दुहंमि विरलच्चिय हवंति, तेण मए सेट्ठिवराओ अवमाणसहणेण रूवगमेव लद्धं' । उवएसो –

किविण–सेट्ठिणो नायं, सब्भावेण विवज्जियं ।
नच्चा अणाहदीणेसु, कुणेज्जा सव्वया दयं ।।२।।

## कृपणश्रेष्ठिकथा।

कृपणः धनिकः श्रेष्ठी क्वचिद्दानं न दत्तवान्।
गालिप्रदानं सततं तस्य पुत्रा तथैव हि।।

कस्मिंश्चिन्नगरे कोऽपि श्रेष्ठिपुत्रः न्यवसत्। दैववशात् स निर्धनो जातः। उत्तमकुलीनत्वात् स कस्मै नायाचत तेन तस्य पुत्रा अपि पूर्णान्नमप्राप्य दुःखिताः सञ्जाताः। तदा पुत्रदुःखेन दुःखिता भार्या अवदत्, 'हे स्वामिन्, एते पुत्राः भोजनाभावेन मरिष्यन्ति तेषां दुःखेन भवान् नाद्रवति किम्? अतः पुत्रानुकम्पया केभ्यः अपि याचित्वा किमपि आनय, अन्यथा ते मरिष्यन्ति। तेषां हत्यापापभागी भवान्' इति। सः भार्यायै अकथयत् यद् अद्ययावत् मया कोऽपि न याचितः। अधुना कुत्र गच्छेयम्, कस्मै याचेय। पत्नी उक्तवती, 'भवतः पितृसुहृदः श्रेष्ठिनः गृहं गच्छतु। सोऽवश्यं किमपि यच्छेद्' इति। जायायाः अत्याग्रहेण सः पितृमित्रस्य श्रेष्ठिनः गृहं गतः। तदा स श्रेष्ठी आसने उपविष्टः आयव्ययम् अलिखत्। तं नत्वा अयं पुरतः उपाविशत्। 'अयं धनहीनः तेन अवश्यं याचितुम् आगतः स्यात्। अतः मौनं वरम्' इति चिन्तयित्वा स श्रेष्ठी लेखनपरोऽभूत्। तेन सह वार्तालापं नाकरोत्। श्रेष्ठिपुत्रेण चिन्तितम्, 'अधुना अयं कार्यव्यापृतः। कार्यं समाप्य मां पृच्छेद्' इति विचार्य तत्रैव उपविष्टः । एवं गतेन यामार्धेन श्रेष्ठिना चिन्तितं, 'नायं गच्छति उपायान्तरं करोमि' इति।

अनन्तरं स श्रेष्ठी विचार्य आपादमस्तकं स्ववस्त्रम् आवृत्य निद्राति। तदा स श्रेष्ठिपुत्रः अचिन्तयत्, 'एषः अतीव श्रान्तः, तस्मात् सुप्तः। अतः पादसंवाहनं करोमि' इति स श्रेष्ठिनः पादसंवाहनम् अकरोत्। श्रेष्ठिना च ज्ञातम्। मम दासः एव पादसंवाहनं करोति इति मत्वा तमुद्दिश्य स अपृच्छत्, 'अरे, अपि अपगतं तत्सङ्कटम्?' इति। तच्छ्रुत्वा श्रेष्ठिपुत्रः अमन्यत, 'एषः किमपि न पृच्छति, न धनं यच्छति, अपशब्दम् उच्चरति, अतः

प्रत्युत्तरं यथावस्थितं दातव्यम्’ इति विचिन्त्य श्रेष्ठिपुत्रोऽभणत् यद् नैतत्सङ्कटमपगतम् , अपि तु भवद्गले बद्धं, ग्रहणं विना न गच्छेत्। एतत्छुत्वा शीघ्रम् उपविश्य निजकर्मचार्यधिकारिणम् अवदत्, ‘किमपि दत्त्वा एनं निस्सारय, निस्सारय’ इति। तदा स अधिकारी श्रेष्ठिपुत्राय रूप्यकमेकं दत्त्वा अपसारयति। स श्रेष्ठिपुत्रः गृहं गत्वा स्वपत्न्यै अकथयत् यत् सुखे बहवः सहगामिनः दुःखे च विरलाः। अतः तेन श्रेष्ठि- पुत्रेण अपमानसहनेन एवं रूप्यकमेकं प्राप्तम्।

कृपणश्रेष्ठिनो न्यायं सद्भावेन विवर्जितम्।
ज्ञात्वा अनाथदीनेषु कुर्वीत सर्वदा दयाम्।।

**********